श्रीवादिराजतीर्थश्रीचरणविरचितम्

# पाषण्डखण्डनम्

श्रीसुरोत्तमतीर्थश्रीचरणकृतया व्याख्यया समलङ्कृतम्




प्रकाशनम्

श्रीभागवताश्रमप्रतिष्ठानम्

श्रीभण्डारकेरिमठः

बेङ्गळूरु

श्रीवादिराजतीर्थश्रीचरणविरचितम्

# पाषण्डखण्डनम्

श्रीसुरोत्तमतीर्थश्रीचरणकृतया व्याख्यया समलङ्कृतम्

खरनामसंवत्सरे अक्षय्यतृतीयायां श्रीसुरोत्तमतीर्थश्रीचरणानां आराधनामहोत्सवे भण्डारकेरिग्रामस्थतद्बृन्दावनसन्निधौ तत्पीठस्थैः श्रीविद्येशतीर्थश्रीमच्चरणैः समर्पितम्

प्रकाशनम्
श्रीभागवताश्रमप्रतिष्ठानम्
श्रीभण्डारकेरिमठः
बेङ्गळूरु

२०११

श्रीवादिराजतीर्थश्रीचरणविरचितं पाषण्डखण्ड़नम्
श्रीसुरोत्तमतीर्थश्रीचरणकृतया व्याख्यया समलङ्कृतम्

श्रीभागवताश्रमप्रतिष्ठानम्
श्रीभण्डारकेरिमठः, बेङ्गळूरु



**Typesetting**
This book is generated using XƎLaTeX on Ubuntu 8.04.
Font: Unicode enabled Sanskrit 2003 and Nakula.

**Cover Page Design**
K. M. Sheshagiri

मुद्रितपुस्तकसङ्ख्या - १०००

मूल्यम् - २० रूप्यकाणि

बृन्दावनमुद्रणद्वारा मुद्रितम्।

# हृदयवाणी

तत्वज्ञानमण्डनं यथा मोक्षसिद्धये आवश्यकम्, तथा मिथ्याखण्डनमपि मोक्षदलात्मकदुःखादिनिवृत्तिरूपफलाप्त्यै आवश्यकम्। तदुक्तं च - "अविद्यया मृत्युं तीर्त्वा" इति।

श्रीवादिराजतीर्थश्रीमच्चरणैः वेदविरुद्धत्वेन पाषण्डमतशब्दितं जैनमतं विशेषतः स्वविरचिते पाषण्डखण्डनाख्ये ग्रन्थे दूषितम्। तस्य सरलं समञ्जसं व्याख्यानं श्रीसुरोत्तमतीर्थश्रीमच्चरणैः कृतम्। श्रीसुरोत्तमतीर्थास्तु श्रीभण्डारकेरिसंस्थानपीठमलङ्कृतवन्तः श्रीवादिराजतीर्थश्रीमच्चरणानामनुजाः। तदुक्तं वृत्तरत्नसङ्ग्रहे -

सुरोत्तमार्यस्तस्यासीत् सोदर्यो विद्वदग्रणीः।
यतीन्द्रो विष्णुतीर्थार्यो यथा मध्वस्य वै पुरा॥

तेषां मूलवृन्दावनं भण्डारकेरिग्रामे विराजते। तेषामाराधनामहोत्सवोऽक्षय्यतृतीयायामनुष्ठीयते। तदङ्गतयाऽस्मत्प्रियशिष्यौ श्रीनिवासवेदगर्भश्रीनिधिवासिष्ठनामानौ तद्व्याख्यानेन समलङ्कृतं पाषण्डखण्डनाख्यग्रन्थं प्रकाश्य तस्य गुरुत्रयान्तर्गतमध्वप्रीयवेदव्यासाय समर्पणार्थं कृतश्रमौ वर्तेते। तौ तद्ग्रन्थं लघुटिप्पण्यादिना परिष्कृत्य तन्मुद्रणे कृतश्रमौ, आर्थिकसाहाय्यं च कृत्वा श्रीभण्डारकेरिमठीयभागवताश्रमप्रतिष्ठानमुखेन प्रकाशं नीतवन्तौ। तौ वादिराजसुरोत्तमविद्यामान्यान्तर्गतमध्वप्रियो भगवान् रामात्मा बादरायणोऽनुग्रहामृतवृष्ट्या पुष्णातु इत्याशास्महे।

इत्यनेकनारायणसंस्मृतयः
श्रीविद्येशतीर्थाः
श्रीभण्डारकेरिमठः

# अथ पाषण्डखण्डनं सव्याख्यम्

॥श्रीहयग्रीवाय नमः॥

**॥ अथ श्रीमद्वादिराजतीर्थश्रीचरणविरचितं पाषण्डखण्डनम्॥**

**ॐ संसेवे हंसहंसार्च्यमिन्दिरेन्दिन्दिरप्रियम्।**
**प्रमोदामोदभरितं श्रीपतेः पादपङ्कजम्॥ १॥**

॥ अथ श्रीमत्सुरोत्तमतीर्थश्रीचरणविरचिता पाषण्डखण्डनव्याख्या॥

आलोच्य मनसा युक्तिसार्थं पार्थस्य सारथेः।
प्रीतये व्याकरिष्येऽहं शक्त्या पाषण्डखण्डनम्॥

अथ श्रीमत्कविकुलाग्रगण्यो वादिराजमुनिः स्वचिकीर्षितस्याविघ्नपरिसमाप्त्यादिप्रयोजनसिद्धये कृतं स्वेष्टदेवतासेवारूपं मङ्गलं शिष्यान् ग्राहयितुं ग्रन्थादौ निबध्नाति- **संसेव इति**॥ पङ्कजं च हंससेव्यं भवति। इदं च हंसाः परमहंसास्त एव हंसा इव, तैरर्च्यं सेव्यमित्यर्थः। इन्दिन्दिरो भ्रमरः। इन्दिरायाः पुंवच्छक्तियोगात् पुम्भ्रमरत्वोक्तिरविरुद्धेति ज्ञेयम्[1]। स्वावलोकनजनितभक्तमनःप्रमोदः आमोदः परिमल इव तत्समतया तेन भरितं युक्तमित्यर्थः। अथवा

[1] 'पुल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती क्वचित्' इति छान्दोग्यभाष्योदाहृतं प्रमाणवचनम्।

भगवतः स्वरूपभूतानन्द एव आमोद इव तेन भरितं पूर्णमित्यर्थः। **श्रीपतेः** इति ग्रहणाल्लक्ष्मीश्चाभिसेविता भवति॥

**यत्सृष्टिचातुरीतोऽब्जमपङ्कं पङ्कवास्यपि।**
**स निर्दोषो विजयते हयग्रीवाभिधो हरिः॥ २॥**

अधुना यद्दोषोक्तिमसहमानो यन्निर्दोषतास्थापनायेमं ग्रन्थमारब्धवान् ग्रन्थकारस्तन्महिमात्वेन तमेव भगवन्तं स्तौति- **यत्सृष्टिचातुरीत इति॥ सः** निर्दोषत्वेन वेदादिप्रसिद्धः। तत्प्रामाण्यानङ्गीकारिणं प्रयुज्य निर्दोषतासाधनायोक्तम्- **यत्सृष्टिचातुरीत इति॥** यस्य हरेः सृष्टिचातुर्यात्। **अब्जं** कमलं **पङ्कवास्यपि अपङ्कं** कर्दमसम्बन्धजन्यकाष्ण्यार्दिदोषरहितमित्यर्थः। तथाच यदा पङ्कजेऽपि भगवन्निर्माणकौशल्यात् कर्दमसम्बन्धजनितकाष्ण्यार्दिदोषाभावः, तदा किमु वाच्यमेतादृशविचित्रजगन्निर्माणधुरन्धरस्य भगवतो दोषाभाव इति।

ननु गोप्यादिसम्भोगेऽपि गोपवेषस्य तद्दोषाभाव आकस्मिक इति चेत्, तर्हि पङ्कजस्य तद्दोषाभाव आकस्मिक इति तुल्यम्। तस्माद्धरिर्निर्दोष इति॥ २॥

**तदीयचरणाम्भोजे चञ्चरीको महामतिः।**
**करोति वादिराजाख्यो यतिः पाषण्डखण्डनम्॥ ३॥**

चिकीर्षितं प्रतिजानीते- **तदीयेति॥ चञ्चरीकः** भ्रमरः। पाषण्डाः समयाः खण्ड्यन्तेऽनेनेति व्युत्पत्या तदभिधं करोतीति सम्बन्धः॥ ३॥

**पुरा पुरत्रयाधीशा दैतेयाः श्रौतवर्त्मनि।**
**अचरंस्तद्वधोपायमयाचन्त हरिं सुराः॥ ४॥**

तत्खण्डनस्य तत्प्रयोगपूर्वकत्वात् तमाह- **पुरेति॥ पुरा** पूर्वजन्मनि। त्रिपुरवासिनोऽत एव तदधीशाः दैत्याः कलियुगादौ ब्राह्मणादिसत्कुलादिषु प्रसूता भूत्वा वैदिकमार्गेऽवर्तन्त। अयोग्यजनानां वैदिकमार्गप्राप्त्या मोक्षप्राप्तिसम्भावनामसहमानाः देवाः **हरिं तद्वधोपायं** तादृशमार्गध्वंसोपायम् **अयाचन्त॥** ४॥

**तदा बुद्धाकृतिर्भूमिमुपेत्याम्नायमार्गतः।**
**अयोग्यांस्तान् बहिः कर्तुं चकारेदमसन्मतम्** [1]**॥ ५॥**

**तदा** तत्प्रार्थनानन्तरं हरिर्बुद्धनामाकारवान् **भूमिमुपेत्य, अयोग्यान्** तत्वज्ञानायोग्यान् दैत्यान् तत्वज्ञानसाधनवेदमार्गतो बहिर्भूतान् **कर्तुमिदमसन्मतं चकार** इति सम्बन्धः॥ ५॥

**तदेकदेशिनो जैनाः**[2] **प्रगीता वेदवैरिषु।**
**अशक्तास्तत्पदं गन्तुमिति न्यायेन केवलम्।**
**आपवर्गं श्रुतेर्मार्गं निनिन्दुर्निन्दितव्रताः॥ ६॥**

एवं सामन्यतो वेदबाह्यप्रसक्तिमुक्त्वा मुख्यदूष्यजैनमतप्रसक्तिमाह- **तदेकदेशिन इति॥ केवलं** 'अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते' इति न्यायेन नतु दूषणारोहणे। **आपवर्गम्** अपवर्गसाधनम्। तेनानिन्दनीयत्वमुक्तं भवति। **निन्दितव्रता** इत्येतेषां वैदिकनिन्दायां हेतुसूचनम्। यतो निन्दितव्रताः, ततो निन्दितं वैदिकनिन्दाख्यव्रतं सम्पादितवन्त इति॥ ६॥

**यजन् क्रतुशतैरिन्द्रो हयमेधैश्च पद्मभूः।**
**महर्षयो वसिष्ठाद्या वैन्याद्याश्चक्रवर्तिनः।**
**कलेः काले समुद्भूताज्जिनात् किं नातिकोविदाः॥ ७॥**

ननु याज्ञीयपशुहिंसाव्रतस्य हिंसामात्रनिषेधेनाकर्तव्यत्वात् तत्कारिवैदिकनिन्दा युक्तेति चेन्न। महद्भिर्ब्रह्मादिभिः कृतत्वेन तस्याः कर्तव्यत्वान्न साऽयुक्तेति भावेनाह- **यजन्निति॥** यज्ञशतैः **यजन् इन्द्रः**, अश्वमेधादिभिर्यजन् **पद्मभूः**, तथा हयमेधादिभिर्यजन्तो **वसिष्ठाद्या** ऋषयश्च। तथा पृथुमान्धातृप्रभृतयः सार्वभौमा राजानश्च कलिकालोत्पन्नात् **जिनात्** अतिनिपुणा न भवन्ति किम्? इत्यन्वयः।

---

[1] 'यस्मैपुराणां प्रथमोऽत्र जातः शुद्धोदनेत्येव जिनेति चोक्तः। क्षेत्रे गयाख्येऽस्य शिशुं प्रजातं सम्प्रास्य दूरेऽत्र बभूव विष्णुः॥' इति महाभारततात्पर्यनिर्णये (३२-१४३)। [2] 'ततस्तु बुद्धोदितपक्षसंस्थो जिनोऽपि चक्रे मतमन्यदेव। बौद्धेन जैनेन मतेन चैव दैत्यांशकाः प्रीतिमगुः समस्ताः॥' इति महाभारततात्पर्यनिर्णये (३२-१५७)।

अयं भावः। ब्रह्मादयो हि सकलधर्मज्ञास्तत्स्थापकाश्चातिधर्मरतिमत्कल्यन्ययुगोत्पन्नाश्च। जिनस्त्वज्ञ अतिनिन्द्यमलधारणाद्याचारनिरतः सकलदोषास्पदकलियुगोत्पन्नश्च। अतस्तन्निषेधो न निषेध इति यज्ञे पश्वालम्बनं कार्यमिति स्थितेर्न तत्कर्तृवैदिकजननिन्दा युक्तेति।

ननु भवदाचार्या अपि कलियुगोत्पन्ना इति चेन्न। तेषां तद्युगोत्पन्नत्वेऽपि कृतयुगादिसमयवर्त्याचारनिरतत्वात्। नहि कलियुगोत्पन्नत्वं साक्षाद्दोषः। कृतयुगोत्पन्नत्वस्यापि दोषत्वापत्तेः। किन्तु वैदिकाचारप्रतिबन्धनद्वारा। स चास्मदाचार्येषु नास्तीति।

ननु ब्रह्मादिभिर्यज्ञः कृत इति कथं निर्णय इति चेत्, इत्थम्। दृश्यन्ते हि ब्रह्मयागस्थलानि प्रयागादिदेशेषु, प्रसिद्धं चेन्द्रस्य शतक्रतुत्वम्, प्रसिद्धाश्च परमयाज्ञिका वसिष्ठाद्या इति। अत एव विश्वामित्रेण स्वयागरक्षणार्थं रामो नीतः। प्रसिद्धाश्च वैन्यादयश्च याज्ञिका इति। श्रूयते च तेषामश्वमेधयागार्थमश्वस्य प्रदक्षिणीकरणं तत्प्रतिबन्धकराजमण्डलबन्धश्च खण्डश्च। तस्माद्युक्तमिति॥ ७॥

**वृथा वित्तं व्ययीकृत्य क्लेशयित्वा कलेवरम्।**
**प्राणिनं च वृथा हन्तुं किं मूढाः पूर्वसूरयः॥ ८॥**

ननु ब्रह्मादयोऽपि यज्ञे प्राणिहिंसां मोहेनैव कुर्वन्तीति किं न स्यात्? इत्यत आह- **वृथेति**॥ भवदेतत् यज्ञे प्राणिहिंसां मोहेनैव कुर्वन्तीति। यदि सा व्यवसायादिवदल्पप्रयाससाध्या सुखरूपा च स्यात्। न चैतदस्ति। यज्ञे हि बहुवित्तव्ययोऽस्ति। न च सोऽपि वृथेति वक्तुं युक्तः। तथा चातिवित्तव्ययेनातिशरीरक्लेशेन यागे पशुहिंसायाः कर्तारो ब्रह्माद्या मूढा इति कथमवगतमाधुनिकेन? इति भावः॥ ८॥

**हविर्भिर्मन्त्रतः पूतैः प्रीणयित्वा सुरेश्वरान्।**
**प्राक् पशूनां दिवं दत्वा यास्यन्त्यन्ते स्वयं दिवम्॥ ९॥**

ननु यागे पशुहिंसा वृथैव फलाप्रतीतेरित्यत आह- **हविर्भिरिति**॥ वैदिकमन्त्रतः शुद्धैः पशुशरीरीयवपादिहविर्भिविष्णवादीन् तोषयित्वा तत्तोषणेन च यागार्थं हिंसितपशूनां पूर्वं स्वर्गं **दत्वा, अन्ते स्वयम्** अपि **दिवं** यान्तीति फलश्रुतेर्युक्ता यज्ञे पशुहिंसेति भावः॥ ९॥

**भृत्यनाशेन नानर्थो भर्तुरर्थप्रदस्य हि।**
**तथा स्वर्दानतो होतुर्न दोषः पशुहिंसया॥ १०॥**

यज्ञार्थं पशोर्हिंसायामपि तस्य स्वर्गदानात्, यजमानस्य न पापमित्येतद्दृष्टान्तमुखेन दर्शयति- **भृत्यनाशेनेति**॥ यथा भृत्यापेक्षितधनदातुर्भर्तुर्युद्धे भृत्यनाशकरणेन पापरूपानर्थो नास्ति, तथा स्वहिंसितपशोः स्वर्गरूपार्थं दास्यतो याज्ञिकस्य पशुहिंसायां न दोष इति॥

ननु युद्धे भटहिंसाकरणमपि पापसाधनमिति चेन्न। युद्धातिरिक्तस्थले हिंसकत्वेनायं पापीयानिति व्यवहारवत्, युद्धे हिंसकस्य हिंसकत्वप्रयुक्तपापीयत्वव्यवहारस्य लौकिकानामभावेन युद्धे भटहिंसाकरणस्य पापसाधनत्वाभावात्। किञ्च तत्र प्रमाणाभावः। हिंसात्वं मानमिति चेन्न। निराकरिष्यमाणत्वात्। निषिद्धत्वेन सोपाधिकत्वाच्च। इयमपि निषिद्धेति चेन्न। जिनवाक्यस्य निषेधकत्वासम्मतेः। तदतिरिक्तनिषेधकस्य चाश्रवणात्। प्रत्युत 'कृष्णो वीरैरिज्यते विक्रमद्भिः'[1] इति विधेरेव श्रवणादितीममर्थं हिशब्देन सूचयति॥ १०॥

**अग्रे हितकृदप्यन्ते सुखदोऽर्च्यो यथा भिषक्।**
**तथा पशोः स्वर्गदानात् कथं पूज्यो न यज्ञिकः॥ ११॥**

ननु पशोर्मरणानन्तरं स्वर्गदानेऽपि प्रथमं मरणरूपाहितस्य कृतत्वान्न याज्ञिकस्य धार्मिकतेत्यत आह- **अग्रे हितकृदिति**॥ यथा पूर्वमतितिक्तौषधदाहच्छेदनादिना मरणतुल्यमूर्छाकृदपि, **अन्ते** रोगापहरणेन सौख्यदो **भिषक्** ना-

---
[1] महाभारते अनुशासनपर्वणि व्यासवाक्यम् १८-६।

धार्मिकः, किन्तु पूज्य एव। त्वन्मतेऽपि त्वया चिकित्सादानस्यैवातिशयित-त्वाङ्गीकारात्। **तथा** पूर्वं **पशोः** दुःखदानेऽपि पश्चात् स्वरससुन्दरस्वर्गदानात् नाधार्मिकता याज्ञिकस्य, किन्तु पूज्यतेति भावः॥ ११॥

**न चेत् परक्लेशकरैर्व्रतैः क्रूरैर्विबोधितैः।**
**जिनोऽपि हिंस्रः स्यादन्ते फलान्नेति समं मम॥ १२॥**

उक्तानङ्गीकारे बाधकमाह- **न चेदिति॥** यदि पशोः पश्चात् सुखदानेऽपि पूर्वं दुःखदानादधार्मिको याज्ञिक इति मन्यसे, तर्हि श्रावकमहाव्रत्यादीनां दुःखकरैरत एव **क्रूरैः** केशोल्लुण्ठनादिव्रतैर्निमित्तैः **जिनोऽपि** हिंसकः **स्यात्** इति। तथा च प्रयोगः। जिनो हिंस्रः वृथा परदुःखदत्वात्, यवनवदिति। न च हेत्वसिद्धिः दुर्व्रतबोधनेन वृथा परदुःखदत्वादिति।

ननु प्रथमं व्रतबोधनेन तदाचरणजनितदुःखदानेऽपि पश्चादनुष्ठानजनि-तसुखदानान्न हिंस्रो जिन इति शङ्कते- **अन्ते फलान्नेति॥** एवं चेत्, समः समाधिरित्याह- **सममिति॥** व्याख्यातप्रायमेतत्॥ १२॥

**पशोः फलं न दृष्टं चेत् पशूनां भवतां फलम्।**
**केन दृष्टं कामचारा द्रष्टारो नः किलर्षयः॥ १३॥**

स्यादेतत्। यदि पशोः स्वर्गरूपं फलं दृष्टं स्यात्। नच तद्दृष्टमिति शङ्का-मनूद्य प्रतिबन्द्या परिहरति- **पशोरिति॥ पशोः फलं न दृष्टं चेत्, पशूनां भवतां केन दृष्टम्** इति। यदि न दृष्टमिति ब्रूषे, तर्हि मलधारणादिना पशुतुल्यानां भवतां वृथानुष्ठानजन्यं फलं केन दृष्टम्? इत्यर्थः। तर्हि साम्यमिति चेत्, तत्राह- **कामचारा इति॥ किल ऋषयः नः** अस्माकं समीहितस्य पशुफलस्य **द्रष्टारो** वसिष्ठाद्या मुनयः सन्ति। नास्ति पारलौकिकफलदर्शनशक्तिस्तेषामित्यत उक्तम्- **कामचारा इति॥**

वसिष्ठादयोऽव्याहतगतयः स्वेच्छानुसारेण स्वर्गादिलोकं गत्वा यज्ञार्थं हिंसितफलं पश्यन्तीति। जिनागमाचारजनितफलद्रष्टारोऽर्हतास्तत्कृतस्मृत्या-

दिनाऽस्माकं समाश्वास इति चेन्न। तत्सार्वज्ञे मानाभावात्। तर्हि महर्षीणामप्यव्याहतगतित्वे मानं नास्तीति चेन्न। श्रुतेः सद्भावात्। अनृतत्वव्याघातपुनरुक्तत्वादिदोषेभ्यः श्रुतिरप्रमाणमिति चेन्न। आपाततोऽनृतत्वादेः प्रमाणत्वेन सम्मते पित्रादिवाक्ये सद्भावेनानैकान्त्यात्। क्वचिद्वेदोक्तदृष्टफलाभावस्य कर्त्रादिवैगुण्यप्रयोज्यत्वसम्भावनया, सर्वथाऽनृतत्वस्य प्रतीतार्थव्यतिरिक्तगूहितार्थसम्भावनया, सर्वथा व्याघातस्य पुनरुक्तत्वादेश्चानिर्णयेन सन्दिग्धासिद्धेः। सम्प्रतिपन्नाविछिन्नाध्येतृपरम्परयाऽकर्तृकत्वप्रसिद्धिमत्त्वेनापौरुषेयत्वात् अनाशङ्कितदोषत्वेन प्रामाण्यस्यैव सुदृढत्वात्। विस्तृतं चैतदन्यत्रेति[1]।

तस्माद्याज्ञिकः पूर्वं पशोर्दुःखदोऽपि पश्चात् स्वर्गदानान्नाधार्मिक इति सिद्धम्॥ १३॥

**कर्मकाण्डेऽतिनिष्णातो भट्टाचार्यस्ततः परम्।**
**जित्वा जिनागमाचार्यान्कृत्वा वैवस्वतातिथीन्॥ १४॥**

इदानीमेतादृशकुयुक्तेरत्यन्तहेयत्वे काञ्चिदाख्यायिकामाह- **कर्मकाण्ड इति॥ अतिनिष्णातः** अतिकुशलः। **ततः** 'जिनमार्गप्रचारतः मदपजये वैदिकानां मरणापादनम्, नो चेद्भवतां तत्' इति समयबन्धं कृत्वा। कथाप्रवृत्यनन्तरं वा। **जिनागमाचार्यान् जित्वा** समयबन्धानुसारेण परेतान् कारयित्वेत्यर्थः॥ १४॥

**राजानं जिनमार्गस्थमानीयाम्नायपद्धतौ।**
**अयजद्विविधैर्यज्ञैरितरानप्ययाजयत्॥ १५॥**

**आनीय** प्रवृत्तं कारयित्वा॥ १५॥

**भवत्कुयुक्तितमसा तदा कुत्र पलायितम्।**
**कृषीवलेषु विप्रेषु देशेऽस्मिन्नधुनाऽऽगताः॥ १६॥**

[1] विष्णुतत्त्वविनिर्णयटीकादावित्यर्थः।

**कृषीवलेषु** इत्यनेन विप्राणां कृष्यासक्त्या वेदाद्यविचारनिबन्धनमतनिराकरणशक्तिरिति सूचयति॥ १६॥

**विप्रवित्तस्पृहायुक्तराजमण्डलमानिताः।**
**जिना जैनस्य पदवी वणिग्वीथिषु वर्तते॥ १७॥**

**विप्रेति॥ विप्रवित्त....** इत्यनेन राज्ञां जैनमताङ्गीकारे सति विप्राणां दूष्यकोटिप्रवेशेन निःशङ्कं तद्वित्तापहारार्थं तन्मतप्रवेश इति सूचयति॥ १७॥

**क्रयविक्रयविद्वांसः किं जानन्ति वणिक्जनाः।**
**न हि धर्मो वणिग्वीथ्यां लशुनैः सह जृम्भते॥ १८॥**

ननु वणिग्भिरप्यतिकुशलैरङ्गीकृतत्वात् तन्मतस्य समीचीनतेत्यत आह- **क्रयविक्रयेति॥** क्रयविक्रयेष्वेव चतुराः वणिजः तत्वग्रहणचातुर्यं किं जानन्ति? न किमपीत्यर्थः। तदेव विशदयति- **नहीति॥** परलोकानुकूलो धर्मो वणिग्वीथ्यां लशुनैः सह न प्रकाशते यतोऽत इति पूर्वेणान्वयः। स हि क्रयविक्रयादिसांसारिकधर्ममपहाय वनाद्येकान्तस्थलेऽहोरात्रं चिन्तयतां मुनीनां चेतस्यपि डोलायितस्तिष्ठतीति, किमु वक्तव्यं वणिजां तदपाटवमिति हिशब्देन सूचयति॥ १८॥

**हिंसा हिंसात्वतोऽधर्मसाधनं चेदुदीर्यते।**
**अहिंसाया अहिंसात्वात् कस्मान्नाधर्महेतुना॥ १९॥**

ननु 'याज्ञीयपशुहिंसाऽधर्मसाधनं हिंसात्वात्, ब्राह्मणहिंसावत्' इत्याद्यनुमानप्रामाण्यात् तद्विरोधात् तस्याः पापसाधनत्वमिति शङ्कामनूद्य दूषयति- **हिंसेति॥** 'तर्हि ब्रूमः' इति शेषः। न प्रतिज्ञामात्रेण तत्सिद्धिरित्यतोऽनुमानस्याभाससमानयोगक्षेमतामाह- **अहिंसाया इति॥** यदि याज्ञीयपशुहिंसा हिंसात्वात् पापसाधनमित्यनुमीयते, तर्हि 'याज्ञीयपश्वहिंसा पापसाधनम् अहिंसात्वात्, अगम्यागमनवत्' इति कस्मान्न भवेत्? भवेदेव। तथा चाभाससमानयोगक्षेमतेति

भावः। अहिंसात्वमपापसाधनब्रह्मचर्यादौ व्यभिचरितमिति चेन्न। हिंसात्वमप्यपापसाधनव्याघ्रचोरादिहिंसायां जिनालयगतजडजीववृक्षादिहिंसायां च व्यभिचरतीति तुल्यम्। यदि व्याघ्रादिहिंसाऽपि पापसाधनमिति मन्यसे तर्हि ब्रह्मचर्याद्यपि पापसाधनमिति तुल्यम्। विधिर्न सहत इति चेत्, तुल्यमितरत्रापि॥ १९॥

**निषिद्धा साऽनिषिद्धेयमिति सम्भाषसे यदि।**
**स्वस्वागमनिषिद्धा चेत्** [1] **सर्वं स्याद्धर्मसाधनम्॥ २०॥**

ननु हिंसात्वमहिंसात्वं च न धर्मसाधनत्वतदभावयोः प्रयोजके। किन्तु, निषिद्धत्वानिषिद्धत्व एवेति शङ्कामनूद्य दूषयति- **निषिद्धेति॥ सा** याज्ञीयपशुहिंसा। **इयम्** अहिंसा। 'तर्ह्यत्र वक्तव्यम्' इति शेषः। किमिदं निषिद्धत्वं नाम? स्वीयशास्त्रनिषिद्धत्वं वा, परशास्त्रनिषिद्धत्वं वा, बहुशास्त्रनिषिद्धत्वं वा, सर्वशास्त्रनिषिद्धत्वं वा, वेदनिषिद्धत्वं वेति पक्षान् प्रत्येकमनूद्य दूषयति- **स्वस्वागमेति॥** स्वस्वागमः स्वं स्वं शास्त्रम्। **सर्वं** याज्ञीयपशुहिंसादिकम्। तस्यापि स्वकीयवैदिकशास्त्रानिषिद्धत्वादिति भावः॥ २०॥

**परागमनिषिद्धा**[2] **चेत् त्वद्धर्मोऽपि ह्यधर्मकृत्।**
**बह्वागमनिषिद्धा**[3] **चेज्जितमध्वरिणा मया॥ २१॥**

**त्वद्धर्मोऽपि** तव केशोल्लुण्ठनादिधर्मोऽपि। तस्यापि त्वच्छास्त्रान्यवैदिकशास्त्रनिषेधादिति भावः। वैधहिंसायास्त्वन्मतान्यपञ्चदर्शनानिषिद्धत्वात्, त्वद्व्रतस्य च निषिद्धत्वादिति भावः॥ २१॥

**सर्वागमनिषिद्धा**[4] **चेद्यत्किञ्चिद्धर्मसाधनम्।**
**आम्नायेषु निषिद्धा**[5] **चेदङ्गीकारस्तदोत्तरम्॥ २२॥**

---

[1] स्वस्वागमनिषेधश्चेत् -पा. [2] परागमनिषेधः -पा. [3] बह्वागमनिषेधः -पा. [4] सर्वागमनिषेधः -पा. [5] निषेधः -पा.

चतुर्थमनूद्य दूषयति- **सर्वागमेति॥ यत्किञ्चित्** भोजनादिकं **धर्मसाधनं** सर्वागमनिषिद्धत्वाभावादिति भावः। न वैधीहिंसा, त्वद्व्रतं वा, उभयस्योभयमतनिषिद्धत्वेन सर्वशास्त्रनिषिद्धत्वाभावादिति भावः। पञ्चममङ्गीकरोति- **आम्नायेष्विति॥** वैधहिंसायास्तदभावादिति भावः॥ २२॥

**वृथैव परनिन्दा चेत् तयैव त्वं विनिन्द्यसे।**
**हिंसापराङ्गनासङ्गाभक्ष्यभक्षणपूर्वकैः॥ २३॥**

तदेवमुक्तन्यायेन वैधनिषेधासम्भवाज्जैनैः क्रियमाणा याज्ञिकनिन्दा वृथैवेत्युक्तं स्यात्। सा चायुक्तेति भावेनाह- **वृथैवेति॥ तयैव** वृथा याज्ञिकनिन्दयैव। वृथा परनिन्दाया 'आत्मप्रशंसा मरणं परनिन्दा च तत्समम्' इति स्मृत्या[1] हिंसात्वोक्तेस्त्वमेव हिंसात्वरूपदोषेण निन्द्यः स्याः॥ २३॥

**तत्तद्धर्मोऽननुगमान्न हेयत्वे प्रयोजकः।**
**निषिद्धत्वं परं वाच्यं न तद्यागादिकर्मसु॥ २४॥**

हिंसात्वस्य पापसाधनत्वाप्रयोजकत्वे युत्यन्तरमाह- **तत्तदिति॥ हेयत्वे** पापसाधनत्वे। **वाच्यं** 'प्रयोजकत्वेन' इति शेषः।

अयं भावः। अस्ति पापसाधनत्वं हिंसायां परस्त्रीसङ्गादौ च। तथाच तेषु पापसाधनत्वेन हिंसात्वं परस्त्रीसङ्गादिधर्मः **न** प्रत्येकं **प्रयोजकः**,[2] अननुगमात्। किन्तु, सर्वत्रानुगतं निषिद्धत्वमेव प्रयोजकम्। अनुगते सम्भवत्यननुगतस्यान्याय्यत्वात्।

तत् निषिद्धत्वम्। **यागादिकर्मसु न** इत्यर्थः॥ २४॥

**केनाप्यश्राव्यमेवेदं श्रावये त्वां वचः सखे।**
**मिथो यथेदं वचनमविरुद्धं तथैव हि।**
**न हिंस्यादिति वाक्यं तन्नापवादैर्विरुध्यते॥ २५॥**

---

[1] 'न चात्मानं प्रशंसेद् वा परनिन्दां च वर्जयेत्' इति कूर्मपुराणे (२-१६-३७)। [2] प्रयोजकं -पा.

ननु कथं नास्ति निषिद्धत्वं याज्ञीयपशुहिंसायां 'न हिंस्यात् सर्वाभूतानि'[1] इति वाक्येन निषेधात् ? इति चेन्न। तस्य सामान्यवाक्यत्वेन 'अग्नीषोमीयं पशुमालभेत' इति वाक्यविहितयाज्ञीयहिंसातिरिक्ताविहितहिंसानिषेधपरत्वेनोपपन्नस्यानन्यार्थकतया निरवकाशवाक्यविहितयाज्ञीयपशुहिंसानिषेधकत्वासम्भवादितीममर्थं दृष्टान्तमुखेनोपपादयति- **केनापीति**॥ कश्चित्स्वमित्रं प्रति वदति "इदं वचोऽतिरहस्यत्वात् केनाप्यश्राव्यम्। तथाऽपि त्वमस्माकं मित्रमिति हेतोस्त्वां प्रतीदं रहस्यं वचः श्रावये" इति **यथेदं** वचनद्वन्द्वं **मिथः** परस्परम् **अविरुद्धं** सामान्यविशेषरूपत्वात्। अन्यथा परस्परविरुद्धत्वेनास्मिन् वाक्यद्वयेऽप्रामाण्यप्रतिपत्तिर्लौकिकानां स्यात्। तद्वत् 'न हिंस्यात्' इत्यादिसामान्यवाक्यम् 'अग्नीषोमीयम्' इत्यादिविशेषवाक्यैर्न विरुद्ध्यते। हिशब्देन सामान्यनिषेधस्य विशेषवाक्यविहिताविषयत्वं दृष्टमिति सूचयति॥ २६॥

**नरान् रक्ष महीपाल चोरान् शिक्ष दिनेदिने।**
**सापवादं न सामान्यं कथमेतेन सिद्ध्यति॥ २६॥**

ननूत्सर्गापवादभाव एव वाक्यानां नाङ्गीक्रियत इत्यतस्तं साधयति- **नरानिति**॥ कश्चिद्राजानं प्रत्येवमाह "हे राजन् त्वं **दिनेदिने नरान्** रक्षस्व **चोरान्** शिक्षस्व" इति। तथाच चोरानिति वाक्यविहितनरविशेषभूतचोरमारणस्य नरान् रक्षस्वेति वाक्येनानिषेधात् तस्योत्सर्गरूपत्वम्, चोरानिति वाक्येन नरान् रक्षस्वेति नररक्षणविधिश्चोरादिदुष्टनरातिरिक्तनरविषय इति ज्ञापकस्यापवादरूपत्वं दृष्टमिति हेतोरपवादसहितं सामान्यवाक्यं कथमेतेन न्यायेन न सिद्धम् ? इति॥ २६॥

**अहिंसा धर्म इत्युक्ते हिंसा बन्धापहारिणी।**
**क्षुत्पिपासादिदुःखौघदातृदेहक्षयात्मिका॥ २७॥**

प्रतिबन्द्या हिंसायाः पापसाधनत्वं निराकरोति- **अहिंसेति॥ अहिंसा धर्म इत्युक्ते** भिन्नकाचार्यकिङ्करा जैनका एवमाहुरिति सम्बन्धः। तथा 'ततोऽपि **हिंसा**

[1] कूर्मपुराणे (२-१६-१)।

एव परमो धर्मः' इति। तत्र हेतुः **बन्धापहारिणी** इति। तस्य स्पष्टीकारार्थमुक्तं क्षुत्तृषादिदुःखजालदातृदेहनाशरूपेति॥ २७॥

**यथा कारागृहस्थानां मोचनं मोक्षदं तथा।**
**ततोऽपि धर्म इत्याहुर्भिन्नकाचार्यकिङ्कराः॥ २८॥**

तत्र दृष्टान्तः- **यथेति॥ कारागृहस्थानां** बन्धनगृहस्थानामित्यर्थः। तत्तद्देह-बन्धध्वंसरूपत्वाद्धिंसाऽहिंसातोऽपि परमधर्म इति। तथाच प्रयोगः। हिंसा पुण्यसाधनं बन्धध्वंसरूपत्वात् निगडबन्धध्वंसवदिति॥ २८॥

**तेऽपि स्वाचार्यशरणा भवन्तोऽपि हि तादृशाः।**
**युक्तिस्तु तेषां महती कथं स्याद्भवतां जयः॥ २९॥**

ननु जैनकपक्षे युक्तिसद्भावेपि तन्मूलप्रमाणं नास्तीति चेन्न। त्वत्पक्षेपि तदभावात्। मम मदाचार्यवचनमस्तीति चेन्न। तर्हि सोऽपि स्वोक्तार्थे स्वा-चार्यवचनं प्रमाणयिष्यतीत्याह- **तेऽपीति॥ तेऽपि** जैनका अपि। स्वाचार्यवचन-शरणाः। हिशब्दो हेत्वर्थः। यस्मात्ते भवन्तश्च केवलं स्वाचार्यवचनशरणास्त-स्माद्दुरुत्तरा प्रतिबन्दीति भावः।

वस्तुतस्तु भवतां तेषां च साम्यमपि नेत्याह- **तेषामिति॥ युक्तिः** पूर्वोक्ता। **महती** अपरिहार्या। अतो न तज्जयो भवतामिति भावः॥ २९॥

**अस्माकं वेदविदुषां न कुतश्चित् पराभवः।**
**परदुःखकरत्वेन हिंसा हेया मनीषिभिः।**
**केशानां लुण्ठनं शोककरं कस्मात् प्रवर्तितम्॥ ३०॥**

तर्हि तत्ववादिनां भवतामपि न तज्जयोपाय इत्यत आह- **अस्माकमिति॥ वेदविदुषाम्** इत्यनेन वेद एवास्माकं तज्जयोपाय इति सूचयति। वाक्ये हि

दोषाः पुरुषदोषनिबन्धनाः, न स्वतः सन्ति। वेदस्यापौरुषेयत्वात् तन्निमित्तदोषशून्य इति वेदस्य प्रामाण्यात्। अन्यथा सर्वाभिमतपुण्यपापस्वर्गनरकाद्यसिद्धेः। नच पौरुषेयवाक्यात् तत्सिद्धिः। पुरुषाणामज्ञानविपरीतज्ञानादेर्बहुलमुपलम्भात् तद्वचसि तन्निबधनदोषसम्भावनयाऽनाश्वासात्। जिनादीनां सार्वज्ञ्यात् तद्वचसा निर्णय इति तु सार्वज्ञ्ये मानाभावादनुपपन्नम्। विस्तृतं चैतदन्यत्रेति।

ननु परदुःखकरत्वेन न कार्या हिंसेति शङ्कामनूद्य दूषयति- **परदुःखेति॥** **हेया** इत्यतः परं 'चेत्' इति शेषः। तर्हि परदुःखकरत्वात् केशोल्लुण्ठनमपि न प्रवर्तनीयमिति भावः॥ ३०॥

**देहिनां म्रियमाणानां कर्म स्वीयं हि कारणम्।**
**जातमात्रस्यात्महत्यादोषः केन निवार्यते॥ ३१॥**

किञ्च सर्वथा हिंसाकरणाभावस्य कस्याप्यसम्भवात् नायमाकाशपानवद्धेय इत्याह- **देहिनामिति॥ हि** यस्मात् **देहिनां** मरणं प्राप्नुवतां स्वोपार्जितं **कर्म कारणम्,** तस्मादुत्पन्नमात्रस्य सर्वस्यापि चेतनवर्गमात्रस्य स्वात्महत्याजनितदोषः केन वारयितुं शक्यते? न केनापीत्यर्थः। तथाच स्वेनोपार्जितकर्मणा शस्त्रेणेव स्वहिंसाकरणं मुनीनामप्यवर्जनीयमिति भावः।

नन्ववर्जनीयेयं हिंसा न पापसाधनमिति चेन्न। हिंसात्वस्य पापसाधनत्वव्यभिचारित्वापत्तेः। एतद्धिंसावद्विहितहिंसाया अपापसाधनत्वापत्तेश्चेति॥ ३१॥

**सुज्ञानसुचरित्राभ्यां देहबन्धं विमोचयन्।**
**यियासुः सद्गतिं ताभ्यां दुर्गतिं हन्त यास्यसि॥ ३२॥**

युक्त्यन्तरेण हिंसामात्रस्य पापसाधनत्वे बाधकान्तरमप्याह- **सुज्ञानेति॥** सुज्ञानं जीवस्वरूपादिज्ञानम्। सुचरित्रं कोशोल्लुण्ठनादिकम्। तदुपदेशद्वारा **ताभ्यां** शरीरबन्धं **विमोचयन्** श्रावकाणां गुरुस्त्वं **ताभ्यां** सुज्ञानसुचरित्राभ्यां

साध्यां **सद्गतिं** सन्ततोर्ध्वगतिं **यियासुर्दुर्गतिं यास्यसि** इति सम्बन्धः। **हन्त** इति हर्षे।

अयं भावः। गुरुणा त्वया श्रावकाणां तत्वोपदेशः कर्तव्यः। अन्यथा गुरुत्वाभावप्रसङ्गात्। स च तत्वोपदेशः प्राकृतदेहबन्धं विसृज्य मुक्तिं प्रापयतीति वक्तव्यम्। तथाच त्वया शस्त्रेणेवोपदेशेन शरीरध्वंसरूपा हिंसा कृतेति त्वमपि हिंसकः स्याः। हिंसकत्वाच्च दुर्गतिरिति।

ननु शस्त्रकृतहिंसैव पापसाधनं नत्वेतादृशी हिंसेति चेन्न। विषादिप्रयोगकृतहिंसाया अप्यहिंसात्वापत्तेः। एतादृशप्रक्रियायां मानाभावाच्च। एवमेव याज्ञीयहिंसाया अप्यपापसाधनतापत्तेश्च॥ ३२॥

**पादे व्याधिवशाज्जाते गुरोः कृमिकुलाकुले।**
**शंस तान् हंसि वा मूढ गुरुं वा हंस्युपेक्षकः॥ ३३॥**

प्रकारान्तरेण हिंसामात्रस्य पापसाधनतां पराचष्टे- **पाद इति**॥ **तान्** प्राणिनः। औषधदाने सति गुरुपादोत्पन्नकृमिहिंसा जायते। तच्छङ्कया तददाने सति गुरोर्व्याधिप्राबल्ये हिंसेति सेयमुभयतः पाशा रज्जुरिति भावः॥ ३३॥

**व्याघ्रं गाः किल निघ्नन्तं कथं हन्तुमुपागतान्।**
**गोपुञ्जहत्यादोषेण[1] भूषितस्त्वं निषेधसि॥ ३४॥**

'न हि कपर्दिकालाभार्थं लक्षलाभं नाशयन्नुपकारी भवति' इति न्यायमनुसृत्य विधान्तरेणापि पराचष्टे- **व्याघ्रमिति**॥ यदि **निषेधसि** तदा हननान्निवर्तितो व्याघ्रः पौनःपुन्येन हन्यादेवेति गवादिप्राणिहिंसाजनितपापराशिना **भूषितः** असीत्यर्थः॥३४॥

**जगद्भक्षयतो रूक्षान् राक्षसानुरुविक्रमान्।**
**न हिंस्यादिति रक्षन् स हिनस्ति न कथं जगत्॥ ३५॥**

---
[1] गोपूर्वहत्यादोषेण -पा.

न केवलमेव व्याघ्ररक्षणेन बहुप्राणिहिंसानुमोद इत्येव, अपि तु, एतादृशकुधर्मप्रवर्तने जगल्लयापत्तिरिति भावेनाह- **जगदिति॥ न हिंस्यात्** इति 'बोधयित्वा' इति शेषः। तथाच निरोधेन जगद्भक्षकान् राक्षसान् रक्षयित्वा जगन्नाशयतोऽतिशयितराक्षसत्वमिति भावः॥ ३५॥

**नेत्रस्योत्पाटनं पापं काचस्योत्पाटनं शुभम्।**
**लोकापहारिहिंसा च न दोष इति गम्यते॥ ३६॥**

व्याघ्रचोरादिहिंसा न पापसाधनमित्यत्रानुमानं प्रमाणयति- **नेत्रस्येति॥ नेत्रस्योत्पाटनं** पापसाधनम्, अपेक्षितच्छेदरूपत्वात्। काचस्य च्छेदनं शुभकरम्, अपेक्षितरक्षाप्रतिबन्धकच्छेदरूपत्वादित्यनेन 'यः प्रेक्षावदभिमतरक्षाप्रतिबन्धकच्छेदः स शुभदः' इति व्याप्तिरुक्ता वेदितव्या। लोकापकारिणां व्याघ्रादीनां हिंसेत्यनेन व्याघ्रादीनां प्रेक्षावदपेक्षितपश्वादिलोकरक्षाप्रतिबन्धकत्वमुक्तं भवति। तेन वक्ष्यमाणहेतोः स्वरूपासिद्धिरुक्ता परिहृता भवति।

तथाच प्रयोगः। व्याघ्रचोरादिहिंसा न पापसाधनम्, प्रेक्षावदपेक्षितरक्षाप्रतिबन्धकच्छेदत्वात्, नेत्ररक्षाप्रतिबन्धकच्छेदवदिति। अत्र प्रेक्षावदपेक्षितेति विशेषणेन केनचिन्मत्तेन क्रियमाणे दुष्टरक्षाप्रतिबन्धकच्छेदे न व्यभिचारः। नच तावदेवास्तु हेतुस्वरूपमिति वाच्यम्। जैनमतरीत्या व्याघ्रादिहिंसामभिलषतामप्रेक्षावत्वेनान्यतरासिद्धिशङ्कापत्तेः। पश्वादिरक्षा च तन्मतरीत्याऽपि प्रेक्षावदपेक्षितेति॥ ३६॥

**त्यजेदेकं कुलस्यार्थं इति न्यायेन धीमता।**
**उपप्लवे हि सर्वस्य कथमेको न शिक्ष्यते॥ ३७॥**

नन्वनेकजीवरक्षार्थमपि मुख्यत एवैकप्राणिहिंसा न युक्तेति चेत्, तत्राह- **त्यजेदिति॥** 'त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्'[1] इति न्यायेन कतिपयव्याघ्रादिहिंसाभावेऽपि ततोऽप्यतिबहुतरपश्वादिलोकोपप्लवः स्यादिति बहूनां रक्षणार्थं कतिपयो व्याघ्रादिः कथं न शिक्ष्यते? इत्यर्थः॥ ३७॥

[1] 'त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्। ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥' इति विदुरवचनं धृतराष्ट्रं प्रति महाभाराते आदिपर्वणि (१०७-०३२)।

**मलोत्सर्गे प्राणिहिंसाऽनुत्सर्गे स्वात्महिंसनम्।**
**इति पाशद्वयाबद्धो हन्ति स्वां चिन्तया तनुम्॥ ३८॥**

'चिता दहति निर्जीवं चिन्ता दहति देहिनम्'[1] इति न्यायमनुसृत्य दूषणान्तरमाह - **मलोत्सर्ग इति**॥ मलत्यागे सति आतपादिसम्बन्धेन तेन सहागतकृम्यादिहिंसा भवति। तदत्यागे तूदरपूरणेन स्वहिंसेति **पाशद्वयाबद्धो** जैनः मलोत्सर्गकर्तव्यताचिन्तया स्वां तनुं हिनस्तीत्यर्थः॥ ३८॥

**तण्डुलानवहन्याच्चेत् स्वीकुर्यादन्नमौषधम्।**
**रमेत कामिनीभिश्चेत् कथं हिंसा न जायते॥ ३९॥**

प्राणभृज्जन्मात्रस्य प्राणिहिंसामकृत्वा स्थित्यभाव एवेति भावेन दूषणान्याह - **तण्डुलानिति**॥ तण्डुलावहनने तद्गतप्राणिहिंसा भवत्येव। अनवहततण्डुलान्नभोजनं च दुःशकम्। उदरे कृमिपीडायामौषधस्वीकारे भवत्येव कृमिहिंसा। तदस्वीकारे तु स्वहिंसैव। अन्नस्वीकारे तु कदाचिदजीर्या भवत्येव हिंसा। यदि कामिनीभी रमणं क्रियेत तर्हि तस्याः कदाचिद्गर्भनिरोधेन भवत्येव हिंसेति पूर्वोक्तैर्हेतुभिः **कथं न हिंसा जायते**? इति सम्बन्धः॥ ३९॥

**फलमूलादिभिः पूजां स्वीकुर्वाणो जिनस्तव।**
**लम्पटः स्यान्न चेत् पूजा व्यर्था स्यात् प्राणहारिणी॥ ४०॥**

प्रसङ्गाज्जिनस्य वीतरागतां पराचष्टे- **फलमूलादिभिरिति**॥ जिनो वीतराग इति वदता वक्तव्यं त्वदाहृतफलपुष्पकुङ्कुमचन्दनादिभिः कृतां पूजां स्वीकरोति, न वा? इति। आद्ये विषयभुक्त्या लम्पटः स्यात्। द्वितीयेऽर्थलक्षणप्राणहारिणी पूजा निरर्थका स्यादिति।

नन्वस्माभिर्भक्त्योपहृतं चन्दनादिकमनासक्त एव भुङ्क्ते इति चेत्, तर्ह्येवमेव कृष्णोऽप्यनासक्त एव लक्ष्म्यादीर्भुङ्क्ते इति तस्यासंसारित्वोपपत्तेः। तस्माज्जिनो न विरागवानिति॥ ४०॥

[1] 'चिन्तायाश्च चितायाश्च बिन्दुमात्रं विशेषकम्। चिता दहति निर्जीवं चिन्ता दहति देहिनम्' इति पूर्णपाठः।

**स्वजनस्तुतिभिर्जैनो निन्दाभिश्च द्विजन्मनाम्।**
**हिंसाद्वयं शास्त्रसिद्धं साधयेच्च क्षणेक्षणे॥ ४१॥**

यच्चोच्यते जैनेन स्वयमहिंस्र इति, तदपि निराचष्टे- **स्वजनेति**॥ **शास्त्रसिद्धं** 'आत्मप्रशंसा मरणं परनिन्दा च तत्समम्' इति शास्त्रसिद्धमित्यर्थः। स्वजनस्तुतेरात्मप्रशंसारूपत्वात्। ब्राह्मणनिन्दायाश्च परनिन्दात्वेन द्वयोरपि हिंसातुल्यत्वादिति भावः॥ ४१॥

**सदा शत्रुवधोद्योगचिन्तनासक्तचेतसाम्।**
**नृपाणां जिनमार्गश्रीरिन्दोरिव विधुन्तुदः॥ ४२॥**

भवतु यथाकथञ्चिदन्येषामहिंसा परमो धर्म इति मताङ्गीकृतिः। राज्ञां तु सर्वथा न युक्तेति भावेनाह- **सदेति**॥ शत्रुहिंसानुकूलयत्नस्मरणोद्युक्तचेतसामित्युपलक्षणम्, तद्वधं कुर्वतामपीति च द्रष्टव्यम्।

नन्वाधुनिकानां राज्ञां शत्रुवधोद्योगेऽपि न पूर्वेषां वीतरागद्वेषाणामिति चेन्न। पूर्वेषामपि तदभावे मानाभावात्। तथाहि। किं पूर्वनृपाणां शत्रव एव न सन्ति, उत तत्सत्वेपि तेषां तदभङ्गेनैव राज्यपालनम्? तेषामपि तत्सत्वस्य तद्भङ्गस्य च भारतरामायणादौ कुरुपाण्डवादियुद्धस्य च श्रवणात्। आधुनिकराजवद्राजत्वात् तेषामपि शत्रुतद्भङ्गवत्त्वानुमानाच्च।

ननु भवत्पुराणमप्रमाणमिति चेन्न। पुराणत्वात् त्वत्पुराणस्याप्यप्रामाण्यापातात्। वस्तुतस्तु त्वत्पुराणस्यैवाप्रामाण्यम्। वेदविरोधात्।

वीतरागत्वं च तेषामयुक्तम्। प्रजारागवत्वाद्धि राजानस्ते। तत्प्रतिकूले द्वेषाभावेन तदनिवर्तने तद्रागस्यैवासम्भवात्। प्रजाप्रतिकूलाभावश्च तदा न युक्तः। तदनुकूलस्याप्यभावापत्तेः। नहि प्रजाप्रतिकूला राक्षसादयो ह्याधुनिकाः।

तस्मात् साधूक्तं चन्द्रस्य राहुरिव **नृपाणां जिनमार्गश्रीः** अतिविरुद्धेति। युगाधिक्यानाधिक्ये च शिष्टाशिष्टाचारप्राचुर्याप्राचुर्यनिबन्धन इति ज्ञातव्यम्॥ ४२॥

**राज्ञां शत्रुवधो धर्मो यदि तर्ह्यागतं पथि।**
**वैधी हिंसा च विप्राणां धर्म इत्येव गृह्यताम्॥ ४३॥**

ननु राज्ञां जिनागमाङ्गीकारेऽपि तच्चिन्ता च युक्ता। तस्य तद्धर्मत्वादिति शङ्कामनूद्य दूषयति- **राज्ञामिति॥ यदि 'राज्ञां शत्रुवधो धर्मः'** इति ब्रूषे, तर्हि **मार्गे आगतम्** 'त्वया' इति शेषः। तस्यैव स्पष्टीकारो **वैधी** इत्यादिनेति द्रष्टव्यम्॥ ४३॥

**स्थावराणां यदा हिंसां कुरुषे पुरुषाधम।**
**न हिंस्यादिति वाक्यस्य निषेद्धा कस्तदा तव॥ ४४॥**

किञ्च, अहिंसा धर्म इति तत्स्वक्रियाविरुद्धं चेत्याह- **स्थावराणामिति॥ स्थावराणां** मुद्गमाषवृक्षादीनां **हिंसा यदा** स्वोपभोगाय **कुरुषे** , तस्मात् **तदा** 'न हिंस्यात्' इति वाक्यार्थस्य **निषेद्धा** को वा? त्वमेवेत्यर्थः। तथाच, अहिंसा धर्म इत्युक्त्वा वृक्षादिहिंसा स्वक्रियाविरुद्धेत्यर्थः॥ ४४॥

**दशेन्द्रियवतां हिंसा निषिद्धा नापरेति च।**
**विभागः केन ते सिद्धः स्वागमादेव केवलम्॥ ४५॥**

ननु 'न हिंस्यात्' इति निषेधस्य दशेन्द्रियवत्प्राणिहिंसानिषेधो विषयः। वृक्षादयस्तु न दशेन्द्रियवत्प्राणिनः। अतस्तद्धिंसा न दोषायेति शङ्कामनूद्य दूषयति- **दशेन्द्रियेति॥ अपरा** दशेन्द्रियरहितप्राणिहिंसा। **विभागः** दशेन्द्रियतदभाववत्प्राणिहिंसानिषेधानिषेधरूपः। तव **केन** प्रमाणेन **सिद्धः**? इति प्रश्ने. **केवलं स्वागमात्** जिनागमात् एव सिद्ध इति वक्तव्यम्॥ ४५॥

**तथा परागमादेव न विभागः कथं तयोः।**
**अन्धानां बधिराणां च पङ्गुमूकशिखण्डिनाम्॥ ४६॥**

**तथेति**॥ तर्हि **परागमादेव** हिंस्याहिंस्यवस्तुनोः **विभागः** अनिषिद्धनिषिद्धहिंसाकर्तव्यताकर्तव्यरूपः **कथं न** सिद्ध्यतीत्यर्थः। यद्येवं मदागमान्न सिद्ध्येत्, तर्हि त्वदागमात् तद्विभागो न सिद्ध्येदिति भावः।

प्रतिबन्द्या न निर्णय इति दूषणान्तमाह- **अन्धानामिति**॥ अन्धबधिरपङ्गूनां चक्षुःश्रोत्रपादेन्द्रियरहितत्वेन मूकशिखण्डिनोश्च वागिन्द्रियगुह्येन्द्रियश्रून्यत्वेन दशेन्द्रियवत्वाभावात्॥ ४६॥

**महीस्थानां च जन्तूनां हिंसा ते तस्थुषामिव।**
**कर्तव्येत्यागतं मन्द निन्दितादतिनिन्दिता॥ ४७॥**

**महीस्थानामिति**॥ तद्धिंसा **तस्थुषां** वृक्षादीनामिव **कर्तव्येत्यागतम्**। अस्तु तद्धिंसाकर्तव्यतेत्यत उक्तम्- **निन्दितादतिनिन्दितेति**॥ अन्धादिरक्षाया एव स्मृतिषु विधानादिति भावः॥ ४७॥

**नानेन्द्रियवतां हिंसा दोषो नैकेन्द्रियस्य चेत्।**
**कुतो न क्रियते तर्हि कुक्कुटाण्डस्य खण्डनम्॥ ४८॥**

ननु न वयं दशेन्द्रियवत्प्राणिहिंसा निषिद्धेति ब्रूमः। येनान्धादिहिंसा कर्तव्येति स्यात्। किन्तु? नानेन्द्रियवद्धिंसा निषिद्धेति। तथाच, अन्धादीनां नानेन्द्रियवत्वात् तद्धिंसा न कर्तव्येति शङ्कामनूद्य दूषयति- **नानेन्द्रियवतामिति**॥ दोषः दोषसाधनम्। **एकेन्द्रियस्य** एकैकेन्द्रियस्य। तथाच वृक्षादीनां नानेन्द्रियाभावात् तद्धिंसा न दोष इति ब्रूषे, तर्हि **कुक्कुटाण्डस्य** नानेन्द्रियवत्वाभावात् तद्धिंसा **कुतो न क्रियते**? इत्यर्थः॥ ४८॥

**पश्चाद्व्यक्ता तस्य नानेन्द्रियवत्ता यदीष्यते।**
**स्थिराणां चरता प्राप्त्या तथात्रापीति निर्णयम्॥ ४९॥**

ननु कुक्कुटाण्डस्य तद्दशायां नानेन्द्रियवत्वाभावेऽपि कुक्कुटतादशायां सन्ति नानेन्द्रियाणि। न हि तदैव नानेन्द्रियवद्धिंसा दोष इति ब्रूमः। किन्तु? नानेन्द्रियात्यन्ताभावानधिकरणहिंसा पापसाधनमिति शङ्कामनूद्य दूषयन् प्रकृते

तथैवास्त्विति परिहरति- **पश्चादिति॥ यदि** कुक्कुटाण्डस्य **पश्चात्** कुक्कुटतादशायां **नानेन्द्रियवत्ता** अभिव्यक्तेति **इष्यते**, तर्हि कर्मवशात् **स्थिराणां** स्थिरवृक्षादिभावङ्गतानां चरमनुष्यादिशरीरादिप्राप्तेर्विद्यमानत्वेन, **तथा** कुक्कुटाण्डवत् नानेन्द्रियात्यन्ताभावानधिकरणत्वम् **अत्र** वृक्षादिष्वस्तीति **निर्णयं** निश्चयं कुर्वित्यर्थः॥ ४९॥

**सङ्गीतश्रवणाच्चैव पानाद्धूपाभिनन्दनात्।**
**पादस्पर्शाच्च नारीणां तेऽपि नानेन्द्रियाश्रयाः**[1] **॥ ५०॥**

किञ्च, अस्तु वा नानेन्द्रियात्यन्ताभावानधिकरणहिंसा न पापसाधनम्। तथपि वृक्षादीनां तद्दशायामपि नानेन्द्रियात्यन्ताभावानधिकरणत्वात् तच्छेदस्य पापसाधनत्वमेवेत्याह- **सङ्गीतश्रवणादिति॥ सङ्गीतश्रवणात्** कश्चिद्वृक्षः फलति। तेन वृक्षजातीये श्रोत्रवत्त्वमनुमीयते। तथा कश्चिद्वृक्षः कामिनीमुखस्थमधुपानसेकात् फलति। तेन तज्जातीये रसनेन्द्रियानुमानम्। तथाऽशोकादिः कामिनीपादाघातात् फलति। तेन तज्जातीयस्य स्पर्शेन्द्रियानुमानम्। तथा कश्चिद्वृक्षो धूपसमर्पणजनितसन्तोषात् फलति। तेन घ्राणेन्द्रियानुमानम्। तथा नालिकेरादिर्वृक्षान्तरनिरोधं परिहृत्य तन्निरोधरहितभागान्तरमुपसर्पति। तेन वृक्षजातीयस्य चक्षुरनुमानमपि द्रष्टव्यम्। तस्माद्वृक्षादीनामपि नानेन्द्रियवत्वात् तद्धिंसायामपि पापसाधनत्वे भवत्येव जैनजिह्वानिरोध इति॥ ५०॥

**न जातिभेदः स्थिरता चरणाभाव एव हि।**
**स्थिरं तद्ध्यण्डमेवादौ मासान्ते जायते चरम्॥ ५१॥**

नन्वहिंसायां चरत्वं हिंसायां स्थिरत्वं प्रयोजकम्, तयोर्जातिविशेषत्वादित्याशङ्क्य परिहरति- **न जातीति॥ जातिभेदः** जतिविशेषः। **स्थिरता** इत्युपलक्षणम्। चरतेत्यपि द्रष्टव्यम्। चरणं = सञ्चरणम्। गतिरिति यावत्। तदभाव **एव** स्थिरतेत्यर्थः। हिताहितप्राप्तिपरिहारार्थं सञ्चार एव चरतेत्यपि द्रष्टव्यम्। स्थिरत्वचरत्वयोर्जातित्वे मानाभावादिति भावः। **तद्ध्यण्डमेव** कुक्कुटाण्डमेव **स्थिरं**

---

[1] 'गीतात् पुष्पफलावाप्तिः स्पर्शात् कार्श्यं रसात् स्थितिः। अपि वृक्षस्य दृश्यन्त इति नानात्मता भवेत्॥' इत्यनुव्याख्याने (२-२-२५२)।

गतिनिवृतिमत्वादिति भावः। **मासान्ते** उत्पत्तिमारभ्य मासावसाने **चरं जायते**। अतः कुक्कुटाण्डं स्थिरमिति तद्भोज्यं स्यादिति भावः॥ ५१॥

**परोपकारिभिर्वृक्षैर्जिनवेश्मकृतिर्हतैः।**
**यथा पुण्याय सा काचित् तथा पुण्याय कल्प्यताम्॥ ५२॥**

युक्त्यन्तरेणापि वैधहिंसाया अपापसाधनत्वं साधयति- **परोपकारिभिरिति**॥ हतैः चिछन्नैः। जिनमन्दिरनिर्माणं **यथा** पुण्यसाधनाय भवति, **तथा कादि्चत्** हिंसा पुण्यसाधनाय **कल्प्यताम्** इति सम्बन्धः॥ ५२॥

**स्याद्वादिनः सप्तभङ्गिरतस्य तव दुर्वचः।**
**न स्याद्धिंसेत्येकपक्षालम्बनं मौर्ख्यजृम्भणम्॥ ५३॥**

दूषणान्तरमाह- **स्याद्वादिन इति**॥ सत्स्यात्, असत्स्यात्, इत्यादिरीत्या[1] **स्याद्वादिनः** सच्च भवत्यसच्च भवतीत्यादिरीत्या सप्तभङ्गि सर्वमित्युक्तिनिरतस्य अत एवानेकान्तवादिन इति द्रष्टव्यम्। **हिंसा न स्यादेव** इत्येकपक्षः नियतपक्षः तदालम्बनं दुर्मूर्खताप्रकटनरूपम्। अनेकान्तवादित्वभङ्गप्रसङ्गादिति भावः।

तस्माद्वैधहिंसा कर्तव्येति सिद्धम्॥ ५३॥

**यदि कृष्णाजिने द्वेषः किं बर्हैः सुकृतं कृतम्।**
**हिंसाविहारसञ्चारमयूराधरिलोमभिः॥ ५४॥**

यच्चोच्यते जैनैः कृष्णाजिनमस्पृश्यमिति तदनूद्य दूषणमाह- **यदिति**॥ **यदि** कृष्णाजिनविषये **द्वेषः** , तर्हि स्पृश्यत्वेनाङ्गीकृतैः **बर्हैः सुकृतं किं कृतम्** ? इति परिहासः। कृष्णाजिनतोऽपि बर्हाणामस्पृश्यत्वे हेतुः- **हिंसेति**॥ हिंसैव विहारः = विनोदः, यस्य सञ्चारस्य तादृशसञ्चारवन्मयूरचञ्चललोमभूतैरिति। प्राण्यङ्गत्वात् कृष्णाजिनमस्पृश्यं चेत्, तत्त्वाविशेषाद्बर्हमप्यस्पृश्यं स्यादिति भावः॥ ५४॥

---

[1] जैनेन सप्तप्रकारमित्थमभ्युपगतम्। सत्स्यात्, असत्स्यात्, सदसत्स्यात्, सदसद्विलक्षणं च स्यात्, सदसच्च तद्विलक्षणं च स्यात्, उक्तमेतन्न स्यात्, स्याच्चेति।

**अमेध्यासृङ्मूत्रपूर्णामालिङ्गन्नङ्गनात्वचम्।**
**पूयास्थिजन्तुभिः पूर्णां गुरोः कायत्वचं स्पृशन्॥ ५५॥**

ननु चर्मत्वाद्गोचर्मवत्कृष्णाजिनमस्पृश्यमिति चेत्, इयमुक्तिः स्वक्रिया-विरुद्धेत्याह - **अमेध्येति॥** चर्मास्पृश्यमित्युक्त्वा सम्भोगसमये अङ्गनाशरीरत्व-गालिङ्गनं स्वक्रियाविरुद्धम्। तथा गुरुशरीरचर्मस्पर्शः पादसंवाहनादिसमये स्वक्रियाविरुद्धः॥ ५५॥

**पादोदकं च शिरसा बिभ्रत् तस्याशुचेर्मलात्।**
**जैन किं निन्दसे हीन विहितां विप्रसम्पदम्॥ ५६॥**

अधिकं च दूषणमुच्यते- **पादोदकमिति॥ विहितां** 'कृष्णाजिने ज्ञानसिद्धिः' इत्यादिनेत्यर्थः॥ ५६॥

**जीवतश्चर्म नाशुद्धमशुद्धं मृतकस्य चेत्।**
**पूतापूतविभागोऽस्तीत्यागतं तर्हि चर्मसु॥ ५७॥**

ननु यदुक्तं चर्मत्वात् कृष्णाजिनमस्पृश्यमित्युक्तिः स्वक्रियाविरुद्धा त्वयापि गुरुशरीरचर्मादिस्पर्शकरणादिति, तदयुक्तम्। गुरुशरीरचर्मादेर्जीवच्चर्मत्वादस्पृश्यत्वे मृतचर्मणः प्रयोजकत्वादिति शङ्कामनूद्य दूषयति- **जीवत इति॥** यदि जीवच्चर्म पवित्रं मृतचर्मापवित्रमुच्यते, **तर्हि चर्मसु** अपि किञ्चित् पवित्रं किञ्चिदपवित्रमिति **विभागोऽस्तीति** प्राप्तम्। तथाप्यस्पृश्यत्वे मृतचर्मत्वं प्रयोजकमिति कृष्णाजिनमस्पृश्यमिति चेन्न। यथा यवनचण्डालविड्वराहशरीरचर्मणि व्यभिचारात् स्पृश्यत्वे जीवच्चर्मत्वं न प्रयोजकम्, तद्वदस्पृश्यत्वे मृतचर्मत्वमपि न प्रयोजकम्, किन्तु विहितचर्मत्वमेव स्पृश्यत्वे प्रयोजकम्। तच्च कृष्णाजिनेऽप्यस्तीति। तस्मादाचारविषये न युक्तिसञ्चारः, किन्तु शिष्टवचनादेवाचारानाचारचिन्ता कार्येति॥ ५७॥

**पूर्वेषां वचनं ग्राह्यं युक्तिः कुत्रोपयुज्यते।**
**नालिकेरासवं हेयं पेयं तत्फलजोदकम्॥ ५८॥**

इममर्थं सदृष्टान्तमुपपादयति- **पूर्वेषामिति**॥ पूर्वं विद्यमानानां शिष्टानां **वचनम्** एवाचारानाचारचिन्तायां मानत्वेन ग्राह्यम्। **युक्तिः** आचारविषये **क्व उपयुज्यते**? यथा नालिकेरपुष्पजन्यत्वाविशेषेऽपि तन्मद्यं त्याज्यं तत्फलोदकं पेयमित्यत्र शिष्टवचनमेव प्रमाणयितव्यम्। युक्तिचिन्तायां तु पेयं हेयं हेयं पेयं वा स्यात्।

तस्माच्छिष्टवचनबलादजिनं ग्राह्यमिति सिद्धम्॥ ५८॥

**यदि शङ्खोदकं त्याज्यं करस्थं केन पूज्यते।**
**असृक्पूर्णार्द्रचर्मस्थजलकल्पमबुद्धिना॥ ५९॥**

यच्चोच्यते जैनैः शङ्खोदकं त्याज्यमिति तदनूद्य दूषयति- **यदीति**॥ **यदि शङ्खोदकं त्याज्यम्** इत्युच्यते, तर्हि गण्डूषाद्यर्थं **करस्थं केन** निमित्तेन **पूज्यते**? उभयोः प्राण्यङ्गस्थत्वाविशेषान्न किप्यतिशयः। शङ्खोदकतोऽपि करस्थस्याग्राह्यत्वे हेतुगर्भं विशेषणम्- **असृगिति**॥ असृजा शोणितेन पूर्णं यदार्द्रं क्लिन्नं चर्म तत्स्थजलसममिति हस्तचर्मणोऽप्यसृक्पूर्णत्वादार्द्रचर्मत्वादिति भावः॥ ५९॥

**नखानां दन्तपङ्क्तीनामस्थ्नां सङ्गेन दूषितम्।**
**जलं निषेव्यसे कस्मान्नहि जिह्वा हिरण्मयी॥ ६०॥**

दूषणान्तरमप्याह- **नखानामिति**॥ येन शङ्खोदकं न ग्राह्यमित्युच्यते तेनैव त्वयाप्यस्थिभूतानां **नखानां** तथा **दन्तपङ्क्तीनां च सङ्गेन** दुष्टं **जलं कस्मात्** सेव्यते? इत्यर्थः। ननु गण्डूषीकृत्य जलपानसमये यथा नखादिसम्बन्धो न भवति तथा पानं क्रियत इत्यत आह- **नहीति**॥ तथापि चर्मभूतजिह्वासम्बन्धोऽवर्जनीय इति भावः॥

**यदार्याचारतः कार्यं तन्न वार्यं कदाचन।**
**गोमयैर्लिप्यते भूमिर्न जात्वपि गुरोर्मलैः॥ ६१॥**

तस्माच्छिष्टपरिग्रहाच्छङ्खोदकं ग्राह्यमित्याह- **यदिति**॥ आर्याः शिष्टाः, तेषामाचारः। **यत् कार्यं** कर्तव्यतावगतं **तत्** कदापि **न** निषेध्यम्। उक्तार्थे युक्तिमाह- **गोमयैरिति**॥ गोमयस्य गुरुमलस्य मलत्वतौल्येऽपि गोमयैरेव भूमिर्लिप्यते, न कदापि गुरुमलैः। गोमयस्यैव शिष्टप्राप्तत्वात्। तद्वदस्थिसम्बन्धाविशेषेऽपि शिष्टाचारवशाच्छङ्खोदकं ग्राह्यं न नरकरस्थमिति॥ ६१॥

**हविःशेषे न दोषश्चेन्मांसमन्यच्च सेव्यताम्।**
**इति चोद्यं न वै हृद्यं मर्यादाभङ्गकारणम्॥ ६२॥**

यच्चोच्यते जैनैर्यज्ञे पशुं मारयित्वाऽग्नौ तन्मांसं हुत्वा तच्छेषमांसभोजने न दोष इति विप्रैरुच्यते चेत्, तद्वदन्यमांसभोजनेऽपि दोषो न स्यादिति, तच्चोद्यमनूद्य दूषयति- **हविःशेष इति**॥ चोद्याहृद्यत्वोपपादनायाह- **मर्यादेति**॥ ६२॥

**मांसमध्यागतं दुग्धं पीयते पाण्डुरं यदि।**
**सेवस्व पूयं तत्रत्यमिति चोद्ये किमुत्तरम्॥ ६३॥**

मर्यादाभङ्गमुपपादयति- **मांसमध्येति**॥ **यदि** महिषीस्तनमध्यात् प्राप्तं शुभ्रं क्षीरं **पीयते** , तर्हि कदाचित् स्तनव्याधिवशात् तन्मध्यागतं क्षीरवच्छुभ्रं **पूयं सेवस्व** इत्युक्ते किमुत्तरम् ? क्षीरवच्छुभ्रत्वस्तनमध्यागतत्वसाम्यात्॥ यथा त्वया हविःशेषस्य ग्राह्यत्वे मांसत्वाविशेषादन्यमांसस्यापि ग्राह्यता स्यादित्युच्यते, तथाऽत्रापि वक्तुं शक्यत्वेन क्षीरं पेयं न पूयमिति मर्यादाभङ्गान्नैतादृक् चोद्यं कार्यमिति भावः॥ ६३॥

**दुराशया महिष्यङ्गजातं सर्पिर्निषेव्यते।**
**वराहतनुसम्भूतं क्षीरं कस्मान्न भुज्यते॥ ६४॥**

एतादृशकुचोद्ये बहूनतिप्रसङ्गानाह- **दुराशयेति**॥ महिषीतनुसञ्जातं घृतं यदि भुज्यते, तर्हि तद्वद्वराहतनुसमुत्पन्नं **क्षीरं कस्मान्न भुज्यते** ?॥ ६४॥

**पीयते महिषीक्षीरं शुनीनां किं न पीयते।**
**अव्यजावडवादीनां गर्दभीनां च तत्पिब॥ ६५॥**

**पीयत इति**॥ यदि महिषीक्षीरं भुज्यते तर्हि क्षीरत्वाविशेषाच्छुनकीनां क्षीरं केन कारणेन **न पीयते**? तद्वदवेरजाया वडवादिनां क्षीरं दुग्धं पिबेत्यर्थः॥ प्राण्यङ्गस्थत्वाविशेषात्॥ ६५॥

**स्थिरजीवान् बहून् हत्वा भवद्भिरपि भुज्यते।**
**नानाशाकादिरूपेण तेषामङ्गं मनोरमम्॥ ६६॥**

'अजमांसं न भोक्तव्यम्' इत्येतत् स्वाक्रियाविरुद्धमित्याह- **स्थिरजीवानिति**॥ **भवद्भिः** जैनैरपि **बहून् स्थिरजीवान्** मुद्गमाषप्रभृतीन् घातयित्वा नानाविधव्यञ्जनरूपेण **तेषां** मुद्गादीनामवयवभूतं फलादि **भुज्यते**॥ ६६॥

**आशा तत्र कथं तेऽङ्ग प्राण्यङ्गत्वाविशेषतः।**
**आचार एव ते तन्मूलमस्माकं[1] महती श्रुतिः॥ ६७॥**

तद्भोजने को दोषः? इत्यत उक्तम्- **आशेति**॥ **प्राण्यङ्गत्वाविशेषतः** प्राण्यङ्गत्वतौल्यात्।

ननु महदाचारवशाद्भुज्यत इति चेत्, अस्माभिरपि तदाचारमूलश्रुतिप्रामाण्येन भुज्यत इति न विशेष इत्याह- **आचार इति**॥ **महती** महदाचारमूलत्वादिति भावः॥

**बर्हं धारयसे यर्हि काकपत्राणि धारय।**
**केशान् लुनासि यद्यङ्ग न लुनास्यङ्गुलीः कुतः॥ ६८॥**

---

[1] ते मूलमस्माकं -पा.

यच्चोच्यते जैनैः स्वगुरूणां बर्हधारणं केशोल्लुण्ठनं चाचार इति तत्राह- **बर्हमिति॥ यर्हि** यदि। **काकपत्राणि धारय** पक्षिलोमत्वाविशेषादिति भावः। हे **अज्ञ** जैन। **केशान् यदि लुनासि** उल्लुनासि, तर्हि शरीरोत्पन्नत्वसाम्यात् **अङ्गुलीः** केन कारणेन **न** छिन्दसीत्यर्थः।

अथवा याज्ञीयपशुमांसस्य भोज्यत्वे तद्वन्मांसान्तरमपि भोज्यं स्यादित्यत्रातिप्रसङ्गान्तरोक्तिः **बर्हम्** इत्यादिनेति द्रष्टव्यम्॥ ६८॥

**अनुष्ठेयं तदेवेह यच्छिष्टैः समनुष्ठितम्।**
**उदरेऽशुद्धमस्तीति बाह्यं तन्न हि गृह्यते॥ ६९॥**

तस्माच्छिष्टपरिग्रहादजिनधारणशङ्खोदकधारणयाज्ञीयपशुमांसादनानि कार्याणीत्यर्थं युक्तिमुखेनोपपादयति- **अनुष्ठेयमिति॥ यच्छिष्टैः** अनुष्ठितं **तदेव** तरैरनुष्ठेयमित्यर्थः। तत्र युक्तिः- **उदरे** सर्वम् **अशुद्धमस्तीति** हेतोः **बाह्यं** बहिर्निःसृतं **तन्न हि गृह्यते** इति। कुचोद्यकरणे तूदरे सर्वस्याशुद्धस्य ग्रहणाद्बाह्ये तद्ग्रहाणस्य शिष्टाननुष्ठितत्वोक्तिव्यतिरेकेण किमुत्तरं स्यात् ? इति भावः॥ ६९॥

**यदि शिष्टा न विप्राः स्युर्वर्णानां गुरवोऽमलाः।**
**ब्राह्मण्यशाखिशाखाभ्यो भ्रष्टाः शिष्टाः कथं खलाः॥ ७०॥**

यच्चोच्यते जैनैर्ब्राह्मण ना शिष्टा इति तद्दूषयति- **यदीति॥** विप्राणां शिष्टत्वोपपादनाय **वर्णानां गुरवोऽमलाः** इति विशेषणम्। तर्हि ब्राह्मण्यात् ऋगादिशाखावतां विप्राणां शाखाभ्यश्च **भ्रष्टाः** तत एव **खलाः** बलवन्महाव्रतिनः **कथं शिष्टाः**? न कथञ्चिदित्यर्थः॥ ७०॥

**वान्ताक्षालितवक्त्राणां[1] सर्वाङ्गे मलधारिणाम्।**
**शूद्रदत्तान्नपानानां विड्वराहात्किमन्तरम्॥ ७१॥**

---

[1] वान्त्यक्षालितवक्त्राणां -पा.

तेषामशिष्टतामेवोपपादयति- **वान्तेति॥** महाव्रतिनो वमने सति गण्डूषाकरणं मुखाक्षालनं च धर्म इति वर्णयन्ति। तथा मलधारणं चाचार इति वर्णयन्ति। विशेषणद्वयमपि विष्ठावराहे महाव्रतिषु च समानम्॥ ७१॥

**मलं विलोलयंस्तद्गप्राणिनस्तत्क्षणे हरन्।**
**शिष्टः किल गुरुस्तेषां तद्गन्धग्रहणोत्सवः॥ ७२॥**

विधान्तरेणापि तस्य शिष्टतां पराचष्टे- **मलमिति॥** मलत्यागानन्तरं कुण्डिकजलेन मलविलोलनं कुर्वन् मलगतकृम्यादिप्राणिनः **तत्क्षणे हिंसन्,** मलविलोलने तद्गतप्राणिहिंसाया अवर्जनीयत्वात्। तद्गन्धः मलगन्धः। तद्ग्रहणमेव परमोत्सवो यस्य स तथा। **तेषां** जैनानाम्। **शिष्टः किल** इति परिहासः॥ ७२॥

**आचारः किल नीतस्य जलस्य प्रवणे सति।**
**तावता मलनिर्मोको न चेत् तस्यैव धारणम्॥ ७३॥**

यच्चोच्यते परैः "मलधारणमेव धर्मः। तदशक्ततायां तु किञ्चिज्जलं तेन नेतव्यम्। मलनिर्मोकाय तज्जलधारादाने सति तावज्जलधारादानेन तन्मलनिर्मोको जातश्चेत् साधु। न चेत्, तन्मलं धार्यम्। तत्क्षालनाय जलान्तरं नानेयमिति महाव्रतिनां महानाचारः" इति, तत् परिहरति- **आचार इति॥** 'मलनिर्मोकार्थम्' इति शेषः। **प्रवणे** यथाकथञ्चिदपगमे **सति** इत्यर्थः। **तावता** यावन्नीतं तावन्मात्रेणेत्यर्थः। **तस्य** मलस्य।

अत एव जैनगुरोर्मलमोचनसमये तत्क्षालनाय नीतस्य कुण्डिकाजलस्य केनचिद्धूर्तेन पातने सति अवशिष्टाल्पजलेन गुदप्रक्षालनं गुरुणाऽकारि। मलानपगमशङ्कया बहुशो हस्तघ्राणनं चाकारि। तत्प्रतीक्ष्य[1] स्थित्वा तेन तदैव प्रणतम्। गुरुर्नतश्चैनं पप्रच्छ। कदा भो त्वयाऽऽगतम् ? इति। पृष्टश्च स आह। प्रथमं हस्तघ्राणनसमये त्वागतोऽस्मीतीत्याभाणकं प्रख्यातं लोके॥ ७३॥

**विना विज्ञानसाम्राज्यं करपात्रव्रतेन किम्।**
**न चेद्बकैकपात्रत्वात् पशुः स्यात् त्वद्गुरोर्गुरुः॥ ७४॥**

---

[1] तत्प्रतीक्षया -पा.

यच्चोच्यते जैनैः करपात्रव्रतित्वात् स्वगुरूणां पूज्यतेति तद्दूषयति- **विनेति**॥ अबाधितमनोत्पन्नज्ञानं विज्ञानम्, तदेव साम्राज्यम्, तद्विनेत्यर्थः। **वक्रैकपात्रत्वात्** करपात्रव्रतादप्यधिकं करसम्बन्धशून्यवक्त्रपात्रत्वात्। **पशुः** गवादिः। **त्वद्गुरोः** तव जैनस्य गुरोः **गुरुः** अतिशयः **स्यात्** इति भावः॥

**विसृष्टाम्नायसरणेः किं भिक्षाटनतः फलम्।**
**ध्वाङ्क्षो बल्यन्नभोगाय गेहङ्गेहं न किं व्रजेत्॥ ७५॥**

यच्चोच्यते जैनैरस्मद्गुरोर्भिक्षाटनाद्गौरवमिति, तदपि निराचष्टे- **विसृष्टेति**॥ विसृष्टवेदप्रविहितस्य त्वद्गुरोर्भिक्षाटनात् **किं फलम्** ? यदि तावन्मात्राद्गौरवम्, तर्हि काकोऽपि बलिरूपतया दत्तान्नभोजनाय प्रतिगेहं व्रजेदिति तेन तस्यापि गौरवं स्यादिति भावः॥ ७५॥

**यदि वान्तान्नशेषेण वक्त्रस्थेन व्रती भवान्।**
**वान्तान्नभक्षकस्तर्हि सारमेयो महाव्रती॥ ७६॥**

यच्चोच्यते जैनैः स्वगुरोर्वमनानन्तरमप्यगण्डूषकरणात् व्रतित्वमिति, तन्निराचष्टे - **यदीति**॥ **यदि** वमनानन्तरपम्यगण्डूषीकरणम्, **तर्हि** वमनान्नशेषतद्गन्धादेर्मुखेस्थितिरवर्जनीयेति मुखस्थेन वान्तान्नशेषेण यदि व्रती भवान् तर्हि, त्वत्तोपि निःशङ्कं **वान्तान्नभक्षकः** शुनकोऽपि **महाव्रती** स्यादिति भावः॥ ७६॥

**यतन्ते मानिनोऽप्यद्धा नैर्मल्याय परं जनाः।**
**मलान्यशुद्धमुख्यानि सदा बिभ्रद्गुरुः किल॥ ७७॥**

अतिस्पष्टार्थोयं श्लोक इति न व्याख्यातः॥ ७७॥

**केशोल्लुञ्छनतः[1] श्रैष्ठ्यं भवद्भिर्यदि लभ्यते।**
**गात्रोल्लुञ्छनदण्डेन चोराणां किं न गौरवम्॥ ७८॥**

---

[1] केशोल्लुण्ठनतः -पा.

यदप्युच्यते जैनैः स्वगुरोः केशोल्लुण्ठनात् पूज्यतेति, तदपि दूषयति- **केशेति**॥ वैदिकाचाररहित्ये दुःखकरकेशोल्लुञ्छनाच्छ्रेष्ठता **यदि लभ्यते**, तर्हि ततोप्यतिदुःखदहस्तपादादिगात्रावयवच्छेदरूपदण्डेन **चोराणां किं न गौरवं भवेत्** ? भवेदेवेत्यर्थः॥ ७८॥

**ज्ञानोज्झितोपि वस्त्रस्य त्यागेन यदि पूज्यसे।**
**परिरब्धवधूमध्याः किं न पूज्या विलासिनः॥ ७९॥**

यच्चोच्यते जैनैः स्वगुरोर्दिगम्बरत्वात् पूज्यतेति तद्दूषयति- **ज्ञानेति**॥ हे जैनगुरो ज्ञानरहितोऽपि त्वं वस्त्रत्यागमात्रेण **यदि.पूज्यसे**, तर्हि ज्ञानरहितत्ववस्त्रशून्यत्वसाम्यादालिङ्गितवधूजघनाः पुरुषाः **पूज्याः किं न** भवेयुरित्यर्थः॥ ७९॥

**द्वादशाब्दं परित्यागी मलभोगी दिनेदिने।**
**सधर्मललनायोगी सोऽयं किल महाव्रती॥ ८०॥**

यच्चोच्यते जैनैः "गुरुर्द्विविधः। अणुव्रती महाव्रतीति भेदात्। तत्र मलधारणद्वादशवर्षजलास्नानकेशोल्लुण्ठनाद्याचारवान् महाव्रती" इति, तत् परिहरति- **द्वादशाब्दमिति**॥ **द्वादशाब्दम्** इति द्वितीया। मलधारणात् **मलभोगी**। तन्मते स्त्रीणामपि महाव्रतग्रहणाङ्गीकारात्समानस्त्रीसम्बन्धवानिति **महाव्रती किल** इति च परिहासः॥ ८०॥

**निशि नानाविधैरन्नैर्जिनं पूजयसे यदि।**
**निश्यन्नं दूषयंस्त्वं वा पातयाधः पताथवा॥ ८१॥**

यच्चोच्यते जैनैः सायं सन्ध्यासमय एव भोक्तव्यम्। सम्भवज्जीवहिंसाकं रात्र्यन्नं सर्वथा त्याज्यमिति, तत्राह- **निशीति**॥ येन निशान्नं निषिद्धमित्युच्यते तेनैव त्वया रात्रौ सम्पादितैर्नानाविधान्नोपहारैर्जिनपूजा रात्रौ सम्पाद्यते। तथा

च, निशान्नं **दूषयन्** त्वम्, त्वत्सम्पादितनानान्नभोगिनं **तं** जिनं **वाऽधः पातय। अथवा** जिनस्य निषिद्धरात्र्यन्नभोगसम्पादनात् त्वं वाऽधः **पत** इत्यर्थः। यदपि निशान्नं जिनो नोपभुङ्क्ते, इति तदपि पूजावैय्यर्थ्यदोषान्निरस्तम्॥ ८१॥

**देहमात्रस्य जीवस्य जिनस्यानेकधामसु।**
**कथं स्याद्युगपत्पूजा मुक्तस्योद्गच्छतः सदा॥ ८२॥**

प्रसङ्गाद्बहुजिनालयान् कारयित्वा बह्वीर्जिनप्रतिमाश्च सम्पाद्य तास्वेकं जिनदेवं प्रतिष्ठाप्य तत्पूजाकरणमयुक्तमित्याह- **देहेति**॥ येन वादिना आलयान् सम्पाद्य जिनपूजा कर्तव्येत्युच्यते, तन्मतेपि जिनो न व्याप्तः, तस्यानीश्वरत्वेन जीवपरिमितत्वाङ्गीकारात्। तथाच देहपरिमितस्य जीवभूतस्य **जिनस्य** जैनकल्पितालयस्थप्रतिमासु युगपदवस्थानासम्भवेनानेकमन्दिरेषु **युगपत्पूजा कथं स्यात्** ? इति सम्बन्धः।

ननु सांसारिकजीवस्य व्याप्त्यसम्भऽवेपि मुक्तजीववज्जिनस्यानेकप्रतिमासु प्रवेशो युज्यत इत्यत उक्तम्- **मुक्तस्योद्गच्छत इति**॥ सन्ततोर्ध्वगमनं मुक्तिरिति तदङ्गीकारेण मुक्तत्वात् सन्ततोर्ध्वं गच्छतो जिनस्याधःस्थितेषु मन्दिरेषु युगपत्पूजा कथं स्यादिति सम्बन्धः॥ ८२॥

**यथाशक्ति जलादीनां शोधनं सर्वसम्मतम्।**
**न चेज्जलस्थजन्तूनां मूत्राद्यं केन शोध्यते॥ ८३॥**

यच्चोच्यते जैनैर्नीरं क्षीरं च संशोध्य पातव्यमिति, तत्र शक्त्यनुसारेण शोधनं विवक्षितं वा तामतिक्रम्य वेति विकल्पौ मनसि निधाय, आद्यमङ्गीकृत्य द्वितीयं हिनस्ति- **यथाशक्तीति**॥ तथाच द्वितीयो गगनपानवदशक्यानुष्ठानत्वान्न धर्म इति भावः॥

**दुःशब्दश्रवणाद्भीतो घण्टां नादयसे यदि।**
**दुष्टस्य स्मरणोपायं नयसि क्व मनस्तव॥ ८४॥**

यच्चोच्यते जैनैः कुशब्दश्रवणशङ्काभङ्गाय भोजनसमये घण्टा नादितव्येति तदनूद्य दूषयति- **दुःशब्दश्रवणादिति**॥ यद्यपि दुःशब्दश्रवणनिरोधाय घण्टानादकरणम्, तथापि दुःशब्दश्रवणवद् दुष्टवस्तुस्मरणस्याप्यकर्तव्यत्वात् तत्साधनमनोनिरोधनमपि तत्समये किञ्चिदनुष्ठेयम्। तच्चासम्भवीति तदकरणवदेतत्करणनिर्बन्धोऽपि त्याज्य इति भावः॥ ८४॥

**पञ्चवाद्यैः सदा व्याप्ता घण्टा चेत्सा श्रुता त्वया।**
**साहचर्याच्चर्मरूपमन्यन्न स्मरसे कुतः॥ ८५॥**

किञ्च दुर्वस्तुभेरीचर्मादिस्मरणसाधनत्वात् सर्वथा घण्टानादस्तत्समये त्याज्य इत्याह- **पञ्चवाद्यैरिति**॥ **साहचर्यात्** भेर्यादिसाहचर्यात्। 'घण्टायाः' इति शेषः। **अन्यत्** भेर्यादि।

तत्स्मरणाभावाय मनोनिरोधोऽपि तत्समये क्रियत इति चेन्न। तर्ह्यावश्यकेन तेनैव दुःशब्दाश्रवणोपपत्तौ घण्टानिनादवैय्यर्थ्यात्। भवद्भिरपि देवपूजादौ घण्टानादादिः कुतः क्रियते? इति चेत्। उपचारत्वेनेति ब्रूमः। नहि घण्टानादादिर्घृतादिदानवदुपचारभूतो भोजनसमये। येन तथात्वेनापि तदा क्रियेतेति॥ ८५॥

**॥ किञ्च॥ परिवेषणकाले स्वां प्रमदां पश्यतो निशि।**
**अनुभूतव्यवायस्य स्मृतेः स्यात् किं निवारणम्॥ ८६॥**

**किञ्चेति**॥ यदि दुःशब्दाश्रवणाय भोजनसमये घण्टा नादितव्येत्युच्यते, तर्ह्यन्नादिपरिवेषणकाले स्वस्त्रियं **पश्यतः** तव रात्र्यां तया सहानुभूतमिथुनीभावस्य स्मरणनिवारकमपि किञ्चित् सम्पाद्यं स्यादित्यर्थः। दुःशब्दश्रवणवत् तत्समये दुश्चेष्टास्मरणस्यापि निषिद्धत्वादिति भावः॥ ८६॥

**आवार्धकं हतप्राणी वेदयज्ञापहासकृत्।**
**काङ्क्षन् विप्रक्षयं जैनो नूतनो यवनो ह्ययं॥ ८७॥**

तस्मात् तदाचारस्यात्यन्तमयुक्तत्वाद्वैदिकाचारस्य च तेनागृहीतत्वान्नि-न्द्यो जैन इति भावेनाह- **आवार्धकमिति**॥ मलविलोलनादिना यावज्जीवं हिंसितकृम्यादिजीवः, वेदयज्ञापहासकः, तथा यज्ञोपवीतदहनादिना ब्राह्मणक्षयमिच्छन् **जैनो** नूतनयवनो **हि** इत्यर्थः॥ ८७॥

**किञ्च॥ सदा दुर्गन्धशीलानां मलपञ्चकधारिणाम्।**
**केशोच्छेदकृतार्तीनां कुम्भीपाकेन किं फलम्॥ ८८॥**

**मलपञ्चकधारिणाम्** इति हेतुगर्भविशेषणम्। यतो मलपञ्चकधारिणः, अतः **सदा दुर्गन्धशीलानाम्** इत्यर्थः। केशोच्छेदः = केशोल्लुंछनम्, तेन कृतक्लेशानामित्यर्थः। **कुम्भीपाकेन किं** प्रयोजनम्? अस्यैवाचारस्य कुम्भीपाकनरकतुल्यत्वादिति भावः॥ ८८॥

**यदि ते ज्ञानितामानस्तन्मूलं किं नु कीर्त्यताम्।**
**विरुद्धागमशार्दूलैर्भवदागमगोक्षयात्॥ ८९॥**

ननु वयं ज्ञानिनः। ज्ञानाग्निना सर्वान् दोषान् दहाम इति जिनगुरु-चोद्यमनूद्य दूषयति- **यदीति**॥ भवेदेतत्, यदि तव ज्ञानित्वं भवेत्। तच्च न सम्भवति। तथाहि। यदि तव ज्ञानित्वाभिमानः, तर्हि ज्ञानमूलं किम्? इति कथ्यताम्। मदागम एव मूलमिति चेन्न। त्वदागमविरुद्धप्रबलवैदिकागमव्याघ्रैर्भवदागमाख्यपशोः क्षयादित्यनेन वैदिकागमानां व्याघ्रत्ववर्णनेन त्वदागमस्य च पशुत्ववर्णनेन प्राबल्यदौर्बल्ये वर्णित इति वेदितव्ये। तथाच त्वदागमस्य तन्मूलत्वासम्भवादिति भावः॥

**आविपालं प्रसिद्धस्य निषेद्धा जगदीशितुः।**
**ऐश्वरीं मोक्षनगरीं कथं मूढ गमिष्यसि॥ ९०॥**

यच्चोच्यते जैनैर्जगत्कर्ता कश्चिदीश्वरो नास्तीति तत्प्रतिषेधति- **आविपाल-मिति**॥ आविपालः = कम्बलपशुपालः, तमारभ्य **प्रसिद्धस्य**। पशुपालैरपि 'सर्वं

दैवततन्त्रम्' इति कथनात् तेषामपि जगदीश्वरः प्रसिद्ध इति ज्ञातव्यम्॥ तादृशस्य **जगदीशितुर्निषेद्धा** 'स नास्ति' इति निषेधकर्ता त्वमीश्वरस्य विद्यमानां वैकुण्ठनगरीं **कथं गमिष्यसि**? इति सम्बन्धः॥ ९०॥

**नास्ति चेदीश्वरः कस्माद्दुःखं भुङ्क्ते घटादिवत्।**
**जडं कर्म परप्रेर्यं कथं कुर्यात् तवाज्ञ तत्॥ ९१॥**

नन्वीश्वरे प्रमाणाभावात् स नास्तीत्युच्यत इत्यत आह- **नास्तीति॥ नास्ति चेदीश्वरः कस्माद्दुःखं भुङ्क्ते**? सुखदुःखयोरीश्वरातिरिक्तस्वतन्त्रकारणाभावादिति भावः। ननु कर्मैव स्वतन्त्रकारणमित्यत आह- **घटादिवदिति॥** कर्म न स्वतन्त्रकारणं दुःखादौ, तस्य परप्रेर्यत्वात्, घटादिवत्। तच्च जडत्वात् **परप्रेर्यं कर्म तव** दुःखादिकं स्वतन्त्रप्रेरकपुरुषं विना **कथं कुर्यात्** ? इति सम्बन्धः॥ ९१॥

**परेण ताडितो दुःखं लभते कथमान्तरम्।**
**तमानयेज्जडं कर्म विनेशं सहकारिणम्॥ ९२॥**

जडं परप्रेर्यमित्युपपादयति- **परेणेति॥** नाश्मादिकं स्वयमेव ताडयित्वा दुःखदायि, किन्तु अश्मादिना करणेन **परेण** अन्येन पुरुषेण **ताडितः** सन् यः पुरुषः **दुःखं लभते** अनुभवतीति हेतोर्जडं परप्रेरितमेव कार्यकारीति दृष्टत्वात्, **जडं कर्म** प्रेरकत्वेन **सहकारिणम्** ईश्वरं **विना आन्तरम्** अन्तर्विद्यमानं **तं** भोक्तारं चेतनं **कथमानयेत्** दुःखादिना कथं सङ्क्लेशयेदित्यर्थः॥ ९२॥

**स्वयं सञ्चरतो वायोः स्रवन्तीनां च सन्ततम्।**
**चलन्तीनां नियन्तारो देवाः सन्ति सतां मताः॥ ९३॥**

ननु जडस्यापि स्वतःप्रवृत्तिर्दृष्टा वाय्वादावित्यत आह- **स्वयमिति॥ स्रवन्तीनां** नदीनाम्। **नियन्तारः** नियामकाः। **मताः** सम्मताः। तस्माद्वाय्वादीनामपि प्रवृत्त्यादौ परप्रेर्यत्वात्, 'यज्जडं तत् परप्रेर्यम्' इति व्याप्त्यभङ्गात् कर्मादिप्रेरकत्वेनेश्वरो'ऽङ्गीकार्य इति भावः॥ ९३॥

**भीतः परोक्तिघातेभ्यः सप्तभङ्गि यदीच्छसि।**
**तदा परोक्तसर्वार्थभारं खर इवोद्वह[1] ॥ ९४॥**

यच्चोच्यते जैनैः सत्वादिभेदेन सप्तभङ्गि सर्वमिति तत्राह- **भीत इति॥ यदि** त्वत्प्रतिवादिभिः स्वस्वमतरीत्या सत्वादिप्रकाराणां साधिततया तद्दूषणाशक्ततया तत्तदुक्तिघातेभ्यो **भीतः** त्वं सप्तानां भङ्गानां प्रकाराणां समाहारमङ्गीकर्तव्यतया **इच्छसि**, तर्हि परैः प्रतिवादिभिरुक्तानां सर्वेषां प्रमेयाणां भारं गर्दभ **इव** वहस्वेत्यर्थः।

तथाच परोक्तभीरुणा त्वया परोक्तवैधहिंसादिकमङ्गीकार्यं न निराकार्यम्। तदनिराकरणे वैधहिंसादिकं न कार्यमेवेत्येकान्तवादभङ्गप्रसङ्गेनापसिद्धान्तापातादिति भावः॥ ९४॥

**पिपीलिकातनौ तावन्मात्रस्य गजयोनिषु।**
**तन्मात्रत्वमपीष्टं चेत् परिणामादनित्यता[2] ॥ ९५॥**

यच्चोच्यते परैर्देहपरिमितो जीव इति तद्दूषयति- **पिपीलिकेति॥ पिपीलिकातनौ** 'गतस्य' इति शेषः। **तावन्मात्रस्य** पिपीलिकाशरीरस्थत्वेन यावच्छरीरं सूक्ष्मं तावत्सूक्ष्मपरिमाणस्येत्यर्थः। **योनिषु** इति बहुवचनश्रवणात् **गज**... इत्यत्र गजादीति ग्राह्यम्। तस्यैव कर्मवशाद्गजादियोनिप्राप्तौ तावन्मात्रत्वं = यावद्गजशरीरं तावत्परिमितत्वमित्यर्थः। पूर्वं सूक्ष्मपरिमाणस्य पश्चात् स्थूलपरिमाणत्वेन परिणम्यमानत्वाद्विकारित्वेनानित्यता स्यादिति भावः।

ननु भवत्पक्षेऽप्यणोर्जीवस्य प्रकाशगुणेन शरीरव्याप्त्यङ्गीकारात् तस्य पिपीलिकाशरीरप्राप्तौ तावत्प्रकाशस्य कर्मवशाद्गजादिशरीरप्राप्तौ तावच्छरीरव्याप्तिप्रकाशाङ्गीकारे प्रकाशाख्यात्मनित्यगुणस्य विकारादनित्यतापत्तिरिति चेत्। अत्र ब्रूमः। प्रदीपादिप्रकाशस्य सूक्ष्मेषु स्थूलेषु तदाश्रयेषु, सूक्ष्मे तदाश्रये

[1] 'तत्तद्दोषनिवृत्त्यर्थं स्वीकृता तत्तदात्मता। यदि तैरखिलैर्दोषैर्लिप्यते चलदर्शनः॥' इत्यनुव्याख्याने (२-२-२३९)। [2] 'देहमाने विकारः स्यादिति स्थास्नूननात्मनः। आह हस्त्यादिदेहेषु ह्यपि स्यादन्यथाभवः ॥ अणुदेहस्य जीवस्य गजत्वे विकृतिर्हि या। देहव्याप्तौ विशेषः कस्तस्याः स्थास्नुतनौ च नुः॥' इत्यनुव्याख्याने (२-२-२५१)।

सूक्ष्मतया, स्थूले च स्थूलतयाऽवस्थितावपि तस्य लौकिकैर्विकृतत्वाव्यवहाराद्विकाराभावोपपत्तेः। नहि भाण्डमध्ये तावद्देशव्यापिनमेव गृहमध्यगतं तत्प्रदेशव्यापिनं च प्रकाशं विकृतमाचक्षते लौकिकाः। किन्तु? पूर्वं सङ्कुचितः पश्चाद्विकासवानित्येवानुभवसिद्धम्। नन्वात्मनोऽपि प्रकाशवत् तत्तच्छरीरेषु सङ्कोचविकासावेवेति चेन्न। तर्हि प्रकाशस्य तत्तद्देशपरिमितत्वाभावात् कायपरिमितत्वमतभङ्गादिति॥ ९५॥

**सदोर्ध्वगमनं मोक्ष इति चेत् तर्हि दुःखिता।**
**अवरोहणतोऽप्यद्रेरारोहोऽप्यतिदुःखदः॥ ९६॥**

यच्चोच्यते जैनैः सन्ततोर्ध्वगमनं मोक्ष इति तदनूद्य दूषयति- **सदेति॥ सदोर्ध्वगमनं मोक्ष इति चेत्, तर्हि** मुक्तस्य **दुःखिता** स्यात्। तदुपपादनार्थमुक्तम्- **अवरोहणत इति॥** अवरोहणम्= अधोगमनम्। **आरोहः** ऊर्ध्वगमनम्। यस्मात् पर्वतस्य **अवरोहणतोऽपि** ऊर्ध्वगमनमतिश्रमकरत्वेनातिदुःखदमित्यनुभवसिद्धम्। तस्मात् सदोर्ध्वगमनस्य मुक्तित्वे तस्यातिश्रमेणातिदुःखदत्वान्मुक्तेरमुक्तित्वमिति भावः॥ ९६॥

**कथा शल्यायते तेषां कर्णयोः पुण्यपूर्णयोः।**
**अशुचित्वं यदाचारः समत्वञ्च यद्व्रतम्॥ ९७॥**

तस्मादेतादृशदुर्जनानां वार्ता पापसाधनमित्याह- **कथेति॥** पुण्यकथापूर्णयोरस्मत्कर्णयोः **तेषां** जैनानां **कथा** वार्ता **शल्यायते** शल्यवदाचरति। कुत एतत्? इत्यत उक्तम्- **अशुचित्वमिति॥** स्नानाभावादिनाऽपावित्र्यं येषां जैनानामाचारः मलसाहित्यं येषां व्रतम्, तेषां कथेति पूर्वेणान्वयः॥ ९७॥

**उदूढललनारत्नः संसारी यदि माधवः।**
**बुद्धमातुः पतिस्तर्हि संसारी न जिनः कुतः॥ ९८॥**

यच्चोच्यते परैः श्रीकृष्णः षोडशसहस्रादुपर्यष्टोत्तरस्त्रीपरिग्रहात् संसारीति तदनूद्य दूषयति- **उदूढेति**॥ **उदूढललनारत्नः** विवाहितस्त्रीरत्नः। **तर्हि बुद्धमातुः** श्रीहरेर्मातुः स्वभार्यायाः **पतिर्जिनः कुतो न**? इति सम्बन्धः। तत्पतित्वं च जिनस्य

'ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम्।
बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति॥[1]' इति पुराणसिद्धम्।

तद्दूषणस्य जैनानामपि सिद्धत्वेऽपि[2] पुराणसिद्धत्वादुक्तिरिति द्रष्टव्यम्। पुराणाप्रामाण्यं तु तत्पुराणाप्रामाण्यप्रतिबन्द्या निरस्तम्।

**यदि पश्चाद्विरागस्य कामाद्यभिभवो नहि।**
**सशरीरस्य पश्चाच्च कामित्वं तर्कयामहे॥ ९९॥**

ननु प्रथमं जिनस्य स्त्रीपरिग्रहेपि पश्चाद्वैराग्यादसंसारित्वशङ्कामनूद्य दूषयति- **यदीति**॥ विगतः रागो यस्मादिति व्युत्पत्त्या **विरागस्य** वैराग्यवत इति फलितार्थः। **कामाद्यभिभवः** कामक्रोधादिपरीभावः नास्तीति। 'तत्र ब्रूमः' इत्यभिप्रायेणोक्तम् - **सशरीरस्येति**॥ स्त्रीपरित्यागेऽपि **सशरीरस्य** तस्य ब्प्पश्चाच्च विरागतादशयामपि ब्कामितां तर्कयामहे इत्यर्थः। शरीराभावे स्त्रीसन्निकर्षेऽपि कामाभावात् तत्सत्वे ललनाया असन्निधानेऽपि कामोद्रेकादिति भावः॥ ९९॥

**क्लीबः सभार्यः किं रागी दीर्घगुह्येन्द्रियः पुमान्।**
**विरागी किमभार्योऽपि तन्न कामी कथं जिनः॥ १००॥**

ननु रागित्वे भार्यावत्त्वमेव प्रयोजकम्, न किन्तु शरीरित्वमित्याह- **क्लीब इति**॥ **क्लीबो** भार्यासहितो **रागी किं**? न, इति हेतोर्भार्यावत्त्वं न रागित्वे प्रयोजकम्। दीर्घगुह्येन्द्रियवान् **पुमान् अभार्योऽपि** वैराग्यवन् किम्? न, इति हेतोः शरीरित्वमेव रागित्वे प्रयोजकम्। तस्माज्जिनः कथं कामी न? इत्यर्थः॥ १००॥

---

[1] श्रीभागवतपुराणे (१-३-२४)। [2] तद्दूषणस्य जैनानामसिद्धत्वेऽपि इति पाठेन भाव्यमिति भाति।

**समनस्केन्द्रियः काममभार्यो लभतेतराम्।**
**पूर्णोदरस्य भोज्यानां सन्निकर्षो ह्यबाधकः॥ १०१॥**

उक्तमेवार्थं द्रढयति- **समनस्केन्द्रिय इति॥** स्त्र्यादिविषयभोगः कर्तव्य इतीच्छावन्मनःसन्निकर्षसहितभोगसाधनेन्द्रियवान् **अभार्यः** सभार्यादप्यतिशयेन **कामं** लभते यतः, अतो न भार्यावत्त्वं कामादिसंसारवत्त्वे प्रयोजकमिति भावः। निष्कामत्वात् कृष्णस्य स्त्रीसंसर्गो न भोगहेतुरित्येतद्दृष्टान्तमुखेन स्पष्टयति- **पूर्णेति॥** हिशब्दो यथेत्यर्थे। यथा मृष्टान्नं भुक्त्वा **पूर्णोदरस्य** पुंसस्तदीयानां भक्ष्यादिभोज्यानां सम्पर्को[1] 'भोक्ष्यामि' इति वाञ्छाकरत्वेन पीडको न भवति। तथा सदापूर्णत्वात् पूर्णोदरत्वात् परमात्मनः स्त्रीसम्पर्को[2] न भोगायेति भावः॥ १०१॥

**मनोदोषेणैव दोषः क्रियामात्रेण न ह्यघम्।**
**येनैवालिङ्गिता कान्ता तेनैवालिङ्गिता सुता॥ १०२॥**

नन्वङ्गनालिङ्गनादिकर्मकरणाद्धरेर्दोष इति शङ्कां निराकरोति- **मनोदोषेणेति॥** आलिङ्गनादिकरणेऽपि **मनोदोषेणैव दोषः** पापम्, 'तत्कर्तुः पुंसो भवति' इति शेषः। मनोदोषाभावेऽप्यालिङ्गनादिक्रियाकरणमात्रेण **अघं** पापं **न** अस्तीत्यत्र दृष्टान्तः- **येनेत्यादि॥ येन** पुरुषेण **कान्ता** स्त्री भोगसमये **आलिङ्गिता** उपगूढा, **तेनैव** पुरुषेण स्वसुतया नमस्कृते सति **सुता** अपि **आलिङ्गिता** भवतीत्यर्थः। तथाच, अङ्गनालिङ्गनत्वाविशेषेऽपि स्वकान्तालिङ्गनं पापसाधनं कामलक्षणमनोदोषसद्भावात् तदभावात् स्वसुतालिङ्गनं न पापहेतुरिति दृष्टत्वात्, भगवतः श्रीकृष्णस्य मनोदोषाभावात्, रुक्मिण्यादिरमण्यालिङ्गनं न दोषावहमिति भावः। भगवतो मनोदोषाभावं चोत्तरत्र वक्ष्यति॥ १०२॥

**जिनो मनोजयी चेत् स्यान्माधवोऽपि मनोजयी।**
**तदसम्भवि यर्हि स्यात् स्पुटमेतदसम्भवि॥ १०३॥**

---

[1] सन्निकर्षो -पा. [2] स्त्रीसन्निकर्षो -पा.

यदुक्तं जिनः शरीरित्वात् कामीति, तन्न। तस्य शरीरित्वेऽपि मनोजयित्वान्न कामित्वमिति। तत्राह- **जिन इति॥ चेत्** यदि **जिनो मनोजयी** इति ब्रूषे, तर्हि **माधवोऽपि** मनोजयवानिति तस्य साङ्गनत्वेऽपि न कामित्वमिति। **तत्** माधवस्य मनोजयित्वम्। **यर्हि** यदि। तर्हि, **एतत्** जिनस्य मनोजयित्वमपि **स्फुटमसम्भवि** इति समं समाधानमिति भावः॥ १०३॥

**पूर्णस्य पाकोऽपूर्णानां भोजनायेति कल्प्यते।**
**तथा पूर्णस्य भोगस्तु लक्ष्म्यादीनां सुखप्रदः॥ १०४॥**

ननु कृष्णो यद्यकामी, तर्हि लक्ष्म्यादिसम्भोगस्तस्य न युक्तः स्यादिति शङ्कां सदृष्टान्तं परिहरति- **पूर्णस्येति॥** यथा कस्यचिन्मृष्टान्नभोजनेन पूर्णोदरस्य पुंसस्तेन क्रियमाणः **पाकः अपूर्णानां** क्षुधितानामन्येषां भोजनार्थमिति**कल्प्यते** लौकिकैः, तद्वन्नित्यानन्दपूर्णस्यास्य कृष्णस्य **भोगः** तेन क्रियमाणो लक्ष्म्यादिसम्भोग इति यावत्। अपूर्णानां **लक्ष्म्यादीनां** सुखद इति कल्प्यतामिति भावः॥ १०४॥

**परदाराभियोगेन यदि दोषो रमापतेः।**
**जायमानो जिनोऽप्यस्तु मातृसङ्गेन दोषवान्॥ १०५॥**

नन्वस्तु परमात्मनः स्वस्त्रीणां लक्ष्म्यादीनां सम्भोगो यथाकथञ्चिन्न दोषावहः। तथाऽपि परवनितानां सम्भोगो दोषावह एवेति शङ्कामनूद्य परिहरति- **परदारेति॥ यदि** लक्ष्मीरमणस्य परदारभूतानां गोपस्त्रीणामभियोगेन सम्बन्धेन **दोष** इति मन्यसे, तर्ह्युत्पद्यमानस्तव **जिनोऽपि** स्वमातृसङ्गेन पापवानस्त्विति सम्बन्धः। जिनोत्पत्तिश्च तस्य जीवत्वात् तेषामपि सम्मतेति द्रष्टव्यम्। स्वमातुश्च पराङ्गनात्वादिति॥ १०५॥

**बालस्य न तथा चेतोविकारो यदि विद्यते।**
**शिशोरदशवर्षस्य तर्ह्यस्याप्यस्त्वविक्रिया॥ १०६॥**

ननु जिनस्योत्पद्यमानस्य बालत्वेन मनोदोषाभावात् न मातृसङ्गः पराङ्गनासङ्गत्वेन दोषहेतुरिति भावेन शङ्कते- **बालस्येति**॥ एवं चेत्, समं समाधानमित्याह - **शिशोरिति**॥ गोपाङ्गनासङ्गप्राप्तेर्दशवर्षाभ्यन्तर एव प्रसिद्धत्वेन **अदशवर्षस्यास्य** कृष्णस्य **अविक्रिया** मनोदोषाभावः **अस्तु** इति सम्बन्धः॥ १०६॥

**अविकारस्य तत्प्राप्तिः कुतश्चेत् तस्य सा कुतः।**
**जनिः सा कर्ममूला चेदियं तत्तत्तपोबलात्॥ १०७॥**

ननु कृष्णस्य मनोविकाराभावे गोपाङ्गनासङ्गप्रसक्तिर्न स्यादिति शङ्कते- **अविकारस्येति**॥ **तत्प्राप्तिः** गोपाङ्गनासम्भोगप्राप्तिः। एतच्चोद्यं तत्पक्षेऽपि सममिति भावेन पृच्छति- **तस्य सा कुत इति**॥ **तस्य** जिनस्य **सा** उत्पत्तिसमये मात्राख्यपराङ्गनासङ्गप्रसक्तिः। ननु जिनस्योत्पत्तिसमये मातृसङ्गप्रसक्तिः स्वोपार्जितकर्मनिमित्तेत्युत्तरयति - **जनिः सा कर्ममूला चेदिति**॥ इदं ममापि सममित्याह- **इयमिति**॥ **इयं** श्रीकृष्णस्य गोपाङ्गनासङ्गप्राप्तिः। **तत्तत्तपोबलात्** तासां तासां गोपीनां 'श्रीकृष्णसंसर्गोऽस्माकं भाव्यः' इत्युद्देशेन कृततपोबलादित्यर्थः॥ १०७॥

**नास्खलद्रेतसः सृष्टिर्यदि दृष्टेति मन्यसे।**
**नाभिदेशादिवाद्यस्य मानसीत्यवधारय॥ १०८॥**

ननु कृष्णस्याङ्गनासङ्गसमये मनोविकारो नास्ति चेत्, रेतस्खलनमपि तस्य नास्तीत्युक्तं स्यात्। तस्य तत्कार्यत्वात्। तथाच तस्य तदभावे तास्वनेकापत्योत्पत्तिर्न स्यादिति शङ्कामनूद्य तत्रोत्तरयति- **नास्खलदिति**॥ **अस्खलद्रेतसः** रेतस्खलनरहितात् 'पुरुषात्' इति शेषः। **सृष्टिः** अपत्योत्पत्तिः। **आद्यस्य** चतुर्मुखस्य। 'सृष्टिः' इत्यनुवर्तते।

इदमुक्तं भवति। यथा खलु हरेः कस्याञ्चित् स्त्रीव्यक्तौ रेतःसेकाभावेपि नाभिकमलाच्चतुर्मुखसृष्टिर्मानसी, तथा प्रकृतेऽपीति। नाभिदेशाच्चतुर्मुखसृष्ट्यनङ्गीकारे लौकिकप्रसिद्धिविरोधः॥ १०८॥

**ललनापरिरब्धस्य यद्यपूर्वा ह्यविक्रिया।**
**वलच्छिखिशिखास्थस्य नवनीतस्य सा कथम्॥ १०९॥**

नन्वङ्गनालिङ्गनादिकरस्यापि भगवतो मनोविकाराभाव आकस्मिक इति शङ्कामनूद्य तत्रोत्तरयति- **ललनेति**॥ **अपूर्वा** पूर्वमदृष्टा। आकस्मिकेति यावत्। वलन्ती = प्रसरन्ती या शिखिशिखा = अग्निज्वाला तत्स्थस्य = तत्सम्बद्ध-स्येत्यर्थः। **सा** अग्निसंसर्गेप्यविकृतिः॥ १०९॥

**मन्त्रसामर्थ्यतः सा चेन्मन्त्राधीशो ह्ययं प्रभुः।**
**नासिघाता ग्रहग्रस्तमिव कामाः स्पृशन्त्यमुम्॥ ११०॥**

नन्वग्निज्वालासम्बद्धस्य हैयङ्गवीनस्याद्रवीभावरूपो विकाराभावो मान्त्रिकमन्त्रसामर्थ्यादिति शङ्कामनूद्य भगवतोऽपि मन्त्राधीशस्याचिन्त्याद्भुतशक्तित्वेनाङ्गनालिङ्गनजन्यदोषास्पर्शः सम्भवतीति भावेनोत्तरयति- **मन्त्रसामर्थ्यत इति**॥ **सा** अविकृतिः। 'नवनीतस्य' इति शेषः। मन्त्रसत्ताप्रदत्वेन मन्त्राधीशः **अयं** श्रीकृष्णः **प्रभुः** समर्थः **हि** यस्मात्, तस्मात् **ग्रहग्रस्तं** ग्रहाविष्टं पुरुषं **असिघाताः इव कामाः**[1] कामजन्यदोषाः **अमुं** श्रीकृष्णं **न स्पृशन्ति** इति॥ ११०॥

**परदाराभिमर्शस्य दोषता केन शङ्क्यते।**
**न दोष इति चार्वाकमतं केन निषिध्यते॥ १११॥**

किञ्च तत्पक्षे चार्वाकप्रतिबन्द्यपि दुरुत्तरेत्याह- **परदारेति**॥ अयमर्थः। यदुच्यते श्रीकृष्णस्य परदाराभिमर्शाद्दोष इति. तत्र वदामो वयं परस्त्रीरमणस्य दोषत्वं **केन** प्रमाणेन **शङ्क्यते**? स **दोषो न** भवति **इति चार्वाकमतं केन** मानेन **निषिध्यते** निषिद्धं क्रियते? इति॥ १११॥

**यदि शिष्टास्त्वदीयाः स्युस्तदीयाः किं न साधवः।**
**पौरुषेयागमो मूलं तस्यपि च तवापि च॥ ११२॥**

ननु कथं मानाभावः? यतोऽस्त्यत्रार्हताद्यस्मदीयशिष्टवचनं मानमिति चोद्यमनूद्य, तर्हि सोऽपि स्वकीयाचार्यगिरं स्वोक्तार्थे मानयिष्यतीत्युत्तरयति-

[1] असिघाताः कामाः -पा.

**यदीति॥ तदीयाः** चार्वाकमतीयाः। **साधवः** शिष्टाः। ननु मत्पक्षीयवचनस्यास्ति मूलमिति चेत्, तत्र वक्तव्यम्। तन्मूलं किं पौरुषेयम् ? उतापौरुषेयम् ? इति। न तावद्वितीयः। अनङ्गीकारात्। आद्ये समं समाधानमिति भावेनाह- **पौरुषेयेति॥ तस्य** चार्वाकस्य। **तव** प्रतिवादिनो जैनस्य। चापिशब्दौ परस्परसमुच्चये॥ ११२॥

**इदानीं ज्ञानिनोऽप्यस्य प्रागनन्तेषु जन्मसु।**
**नाज्ञानतः कानि कानि पापान्यासन् जिनस्य ते॥ ११३॥**

**इदानीम्** एतज्जन्मनि **ज्ञानिनोपि।** अनेन वास्तवं ज्ञानित्वं दुःसाधनमिति सूचयति। **प्रागनन्तेषु जन्मसु** इत्यनेन संसारः प्रवाहतोऽनादिरिति सूचयति। **अज्ञानतः** अज्ञानवशात्। **ते** तव सम्बन्धिनः **जिनस्य** ॥ ११३॥

**प्रायश्चित्तानि चीर्णानि तेन यद्येनसामिह।**
**प्रायश्चित्तीभवत्पुण्यनामा धामांहसः कथम्॥ ११४॥**

ननु जिनस्य यद्यस्ति पापसम्भवः, तथापि तेन प्रायश्चित्ताचरणान्न तस्य तल्लेप इति शङ्कामनूद्य परिहरति- **प्रायश्चित्तानीति॥ तेन** जिनेन। **एनसां** पापानाम्। **प्रायश्चित्तीभवत्पुण्यनामा** प्रायश्चित्तायितपुण्यनामा। कृष्णनामेत्यर्थः। तन्नाम्नां प्रायश्चित्तायितत्वमसिद्धमिति चेन्न। अन्येष्वदृश्यमानं जिनस्य प्रायश्चित्ताचरणमसिद्धमिति तुल्यम्। जैनागमो मानमिति चेत्। अजैनागमो मानमितीतरत्रापि तुल्यम्। अपौरुषेयत्वेनानाशङ्कितदोषश्रुतिप्रामाण्येनासाम्यमप्यस्तीति ज्ञेयम्॥ ११४॥

**शिखण्डिखण्डैर्दोषाणां हानिः किल भवन्मते।**
**बर्हिबर्हावतंसस्य कथं दोषोऽस्य तर्ह्यभूत्॥ ११५॥**

किञ्च **शिखण्डीति॥** शिखण्डिनः = मयूरस्य। खण्डैः = अवयवभूतैः। बर्हैरित्यर्थः। बर्हिबर्हाण्येवावतंसः शिरोलङ्कारो यस्य तस्येत्यर्थः॥ ११५॥

**निषेधविधिबद्धस्य दोषादोषौ न तौ हि गोः।**
**बन्धशून्यस्येश्वरस्य न दोषः केनचित् क्वचित्॥ ११६॥**

किञ्च **निषेधेति**॥ 'ब्राह्मणो न हन्तव्यः' इत्यादिनिषेधः, 'प्रातःसन्ध्यामुपासीत' इत्यादिविधिः, ताभ्यां बद्धस्य। तद्विषयस्येत्यर्थः। **दोषादोषौ** पापपुण्ये। विध्यबद्धस्य न दोषादोषावित्यत्र दृष्टान्तः- **न तौ हि गोरिति**॥ **गोः** पशोरित्यर्थः। तथाच **बन्धशून्यस्य** बन्धरहितस्य **ईश्वरस्य** श्रीकृष्णस्य। **केनचित्** केनापि कर्मणा **क्वचित्** अपि देशे काले च।

तथाच प्रयोगः। न कृष्णः कर्मजन्यदोषवान् विधिनिषेधशून्यत्वात्, गोवत्। नचासिद्धो हेतुः। तस्य बद्धत्वे मानाभावात्। नच स्त्र्यादिमत्वात् तद्वत्वमिति वाच्यम्। करादिमत्वस्येव तस्य तत्राप्रयोजकत्वात्॥ ११६॥

**स्वागमोक्तव्रतत्यागान्मुक्तः कस्मान्न दोषभाक्।**
**मुक्तत्वादिति चेत् तर्हि तस्मादेवानघोऽच्युतः॥ ११७॥**

रीत्यन्तरेणापि भगवतो निर्दोषतां प्रतिपादयति- **स्वागमेति**॥ हरिर्दोषवनिति वदता वक्तव्यम्॥ तन्नये मुक्तो जीवः दोषवान् न वा? इति। आद्ये संसारिवदमुक्तत्वप्रसङ्गः॥ द्वितीये दोषवत्वं दुष्परिहरं केनापि। स्वकीयागमोक्तकेशोल्लुण्ठनादिव्रतत्यागात्। व्रताकरणवत् स्वीकृतव्रतत्यागस्यापि दोषत्वात्। **मुक्तत्वात्** स निर्दोष **इति चेत्, तर्हि तस्मादेव** मुक्तत्वादेव **अनघोऽच्युतः** इत्यर्थः। हरेर्मुक्तत्वमसिद्धमिति चोद्यं तस्यामुक्तत्वे मानाभावदनुपपन्नम्॥ ११७॥

**अकर्तुमन्यथाकर्तुं कर्तुं च जगदीश्वरः।**
**समर्थोऽसावीश्वरत्वात् कथं दोषाः स्पृशन्ति तम्॥ ११८॥**

किञ्च **अकर्तुमिति**॥ दृष्टस्वभावात् **अन्यथा** वैपरीत्येन। **ईश्वरत्वात्** ईश्वरशब्दमुख्यार्थत्वादित्यर्थः। तथाचातिसमर्थस्य हरेर्दोषस्पर्शोऽत्यन्तमसम्भावित इति भावः॥ ११८॥

**क्रूरा अपि नरा लोके नेश्वराणामधीश्वराः।**
**दोषाणामीश्वरस्यास्य दोषैर्ग्रासः कथं भवेत्॥ ११९॥**

किञ्च **क्रूरा इति**॥ अयं भावः। **लोके क्रूरा अपि** तुरुष्काद्याः **ईश्वराणां** स्वपोषकाणां **नाधीश्वराः** घातादिकरणेन दुःखोद्बोधने न समर्था इत्यनेन यो यत्पोषकः स न तेन ग्रस्त इति व्याप्तिं सूचयति। तस्मात् **दोषाणामीश्वरस्य** तत्सत्तादिप्रदत्वेन तत्पोषकस्य **अस्य** हरेः **दोषैर्ग्रासः** कवलीकरणं **कथं भवेत्** ?

अयमत्र प्रयोगः। हरिर्दोषग्रस्तो न भवति, तत्पोषकत्वात्। यो यत्पोषकः स न तेन ग्रस्तः। यथा तुरुष्कपोषको राजा न तेन ग्रस्त इति॥ ११९॥

**नराणां कृतपापानां शास्ता वैवस्वतो यमः।**
**तं लोकपालं यः शास्ति स पापैः किल लिप्यते॥ १२०॥**

किञ्च **नराणमिति**॥ तथाच पापिशासकयमशासकत्वेन भगवतः पापजन्यदुःखभोक्तृत्वलेपोऽसम्भावित इति भावः॥ १२०॥

**किञ्च॥ यस्य पादोदकं गङ्गा पुनाति भुवनत्रयम्।**
**तं पापिनं शङ्कमानाः स्वयमेव हि पापिनः॥ १२१॥**

**किञ्च यस्येति**॥ तथाच स्वपादोदकपावितभुवनत्रयस्य भगवतः पापमत्यन्तमयुक्तमिति भावः॥ १२१॥

**स्वपक्षस्थापनोद्युक्तं विपक्षप्रतिषेधिनम्।**
**रागद्वेषौ मूलदोषौ कथं न स्पृशतो जिनम्॥ १२२॥**

रीत्यन्तरेण जिनस्य दोषित्वमुपपादयति- **स्वपक्षेति**॥ अयमर्थः॥ जिनस्य स्वागमाचार्यत्वमभिलषता त्वया तेन स्वपक्षस्थापनपरपक्षप्रतिषेधौ कृतावित्यङ्गीकार्यम्। अन्यथा दर्शनाचार्यत्वस्यैवासम्भवात्। तथाच स्वपक्षस्थापनस्य परपक्षनिराकरणस्य च मूलभूतौ **रागद्वेषौ** स्वपक्षरागपरपक्षद्वेषौ **जिनं कथं न स्पृशतः** ? इति॥ १२२॥

**स्वोक्त्या विवदमानेषु नानावादिष्वनेकधा।**
**मध्यस्था श्रुतिरेवैका यथा लोकेऽशरीरवाक्॥ १२३॥**

किञ्च श्रुतिप्रामाण्यादपि भगवतो निर्दोषत्वमभिप्रेत्य श्रुतेः प्रामाण्यं समर्थयते- **स्वोक्त्येति**॥ स्वीकार्यमवश्यं श्रुतेः प्रामाण्यम्। अन्यथा तत्तद्वाद्यभिमतधर्माद्यसिद्धिः स्यादित्यभिप्रेत्योक्तम्- **स्वोक्त्येति॥ स्वोक्त्या** वचनेन। **नानावादिषु** तत्तद्वादिषु। 'अयं धर्मः, अयं चाधर्मः' इति केनचिद्वादिनोक्ते, अन्येन तु तद्वैपरीत्येन धर्माधर्मोक्तिः क्रियते। एवम् **अनेकधा विवदमानेषु** विप्रतिपन्नेषु सत्सु तदुपपादनाय **मध्यस्था** निर्णायकत्वेन साक्षिभूता **श्रुतिरेव** अङ्गीकार्या। **एका** मुख्येत्यनेनापौरुषेयत्वेनानाशङ्कितदोषत्वादित्यभिप्रैति। तत्र दृष्टान्तः- **यथा लोके** कस्मिंश्चिद्विप्रतिपन्नार्थेऽशरीरवागुत्पत्तौ सत्यां तथैवेति निर्णीयत इति॥ १२३॥

**न चेद्धर्मस्य निर्णेता भवांश्चेन्नापरः कुतः।**
**प्रतिबन्दीग्रहग्रस्तस्तूष्णीमासीत पण्डितः॥ १२४॥**

नन्वार्हतादिपुरुषवचसैव समाश्वास इति चेत्, तत्राह- **न चेदिति**॥ श्रुत्या मम समाश्वासः **न**। किन्तु? आर्हतादिपुरुषवचसैव निर्णय इत्यङ्गीक्रियते **चेत्,** तर्ह्यार्हतो **भवान् धर्मस्य निर्णेता** निर्णयकर्ता **चेत्, अपरः** त्वदुक्तनिर्णयवैपरीत्येन तन्निर्णेता कपिलादिः **कुतो न** धर्मनिर्णयकर्तृत्वेनाङ्गीकार्यः? इत्यर्थः। सार्वज्ञादङ्गीकारोऽप्युभयत्र तुल्यः। नच परस्परविरुद्धवक्त्राचार्यवचनानां प्रामाण्यम्। वस्तुनि विकल्पापत्तेः। तस्मात् त्वत्कृतनिर्णयविरुद्धाचार्यवचनप्रतिबन्दीरूपग्रहेण ग्रस्तः कवलीकृतः **पण्डितो** भवान् **तूष्णिमासीत** तूष्णीं तिष्ठत्वित्यर्थः॥ १२४॥

**न कृता तत्तदाचार्यैर्हरेण हरिणाऽथवा।**
**अनादिकालतः सर्वैः श्रुतत्वाच्छ्रुतिनामिका॥ १२५॥**

ननु श्रुत्या तदा निर्णयः स्यात्, यद्यपौरुषेयत्वं सिद्धं स्यात्। नच तत्सिद्धमित्यतोऽपौरुषेयत्वं साधयति- **न कृतेति**॥ सर्वज्ञत्वेन तत्तद्वादिसम्मतैः कपिलादिभिः **न कृता**। तत्कृतत्वे हि तत्कृतत्वप्रसिद्धिर्लौकिकानां स्यात्।

कपिलो न वेदकर्ता पुंस्त्वान्मद्वदित्यनुमानपराहतिश्च। कपिलादिसार्वज्ञं तु न प्रमाणगन्धमनुभवति। प्रमाणं विना सार्वज्ञाङ्गीकारे ममापि तत् किं न स्यात् ? वेदेन वेदकर्तृसार्वज्ञसिद्धिस्तत्प्रामाण्यसिद्ध्युत्तरकालीना। नचापौरुषेयत्वेन विना तत्प्रामाण्यसिद्ध्युपायोऽस्ति। तदकर्तृत्वेऽपि वेदकृतिर्भविष्यतीत्यत उक्तम्- **हरेणेत्यादि॥** एतेन 'वेदकर्तुरप्रसिद्धेः' इत्याचार्योक्तां[1] सम्प्रतिपन्नाविच्छिन्नाध्येतृपरम्परायामकर्तृकत्वप्रसिद्धिरूपामपौरुषेयत्वे युक्तिमभिप्रैति।

युक्त्यन्तरं चोच्यते- **अनादिकालत इति॥** श्रुतेः पुराणादीनां च श्रुतत्वाविशेषेऽपि श्रुतेरेव तच्छब्दवाच्यत्वं केनाप्यकृतत्वेसत्तत्वरूपनिमित्तं[2] विना नोपपद्यते। अन्यथा पुराणादीनामपि श्रुतिशब्दवाच्यत्वं स्यात्॥ १२५॥

**वेदयन्ती परं धर्मं तेन वेदपदोदिता।**
**अनाप्तिमूलताभावान्मानं सर्वोन्नतं श्रुतिः॥ १२६॥**

**वेदयन्तीति॥ वेदयन्ती** 'नित्यम्' इति शेषः। तथाच नित्यं धर्मावेदकत्वं तन्नित्यतामन्तरेणानुपपन्नमित्यभिप्रैति। **अनाप्तिमूलताभावात्** इत्यस्यानाप्ताप्रणीतवाक्यत्वादिति फलितोऽर्थः। तथाच प्रयोगः। वेदः प्रमाणम्, अनाप्ताप्रणीतवाक्यत्वादाप्तवाक्यवदिति। नचाप्तवाक्यत्वमुपाधिः। तस्य क्वचिद्वाक्यगतनिर्दोषत्वसम्पादकत्वेन प्रामाण्यप्रयोजकत्वेऽपि स्वतस्तत्राप्रयोजकत्वात्। अत एवाप्तवाक्यत्वाभावेऽपि परेण निर्दोषत्वादभ्रान्ताप्रतारकवाक्यं शुकबालादिवाक्यं यादृच्छिकसंवादिवाक्यं च प्रमाणं दृष्टम्। वेदेष्वाप्तवाक्यत्वाभावेऽप्यपौरुषेयत्वेन निर्दोषतासिद्धेरिति॥ १२६॥

**अतो यज्ञादिसत्कर्मपूज्यो निर्जितदुर्जनः।**
**अवद्याभेद्यमहिमा नारायण इति स्थितः॥ १२७॥**

एवमुपपादितार्थमुपसंहरति- **अत इति॥** 'यजन् क्रतुशतैः' इत्यादिनोक्तार्थस्योपसंहारः - **यज्ञादीति॥** 'यदि शङ्खोदकं त्याज्यम्', 'यदि विप्रा न शिष्टाः स्युः', इत्यादिनोक्तार्थस्योपसंहारः - **निर्जितदुर्जन इति॥** स्वजनमुखेनैव

---

[1] विष्णुतत्त्वविनिर्णये वेदापौरुषेयत्वसमर्थनप्रकरणे श्रीमदाचार्यवचनम्। [2] 'केनाप्यकृतत्वरूपनिमित्तम्' इति स्यात्।

दुर्जनान् जितवानिति भावः। 'उदूढललनारत्नः संसारी यदि माधवः', 'परदाराभियोगेन यदि दोषा रमापतेः' इत्यादिनोक्तार्थस्योपसंहारः - **अवद्याभेद्यमहिमेति**॥ अवद्यैर्दोषैरभेद्यो भेत्तुमशक्यः आनन्दादिमहिमा यस्य स तथोक्त इत्यर्थः॥ १२७॥

**इदं[1] श्रौतमतोद्यानप्रसूनरसनिर्मितम्।**
**वादिराजाख्यसरघासर्वस्वं सेव्यतां बुधैः॥ १२८॥**

एवं निराकृतदुर्मतध्वान्तः प्राकाशितयुक्तिकिरणः श्रीवादिराजयतिराजतरणिः स्वग्रन्थस्य प्रचयगमनमप्यपेक्षितप्रयोजनमिति सूचयन् स्वकृतग्रन्थं सज्जनेष्वर्पयति- **इदमिति**॥[2] श्रौतं श्रुतिमूलकं यन्मतं तदुद्यानमिव। विद्वदधिकसेव्यत्वात्। तत्र विद्यमानशुभप्रमेयाख्यप्रसूनरसानुद्धृत्य निर्मितमित्यर्थः। श्रौतमतस्य पुष्पवाटीत्वेन वर्णितत्वात् तदुद्भवमधुनोऽनिषिद्धत्वेन यत्यादिसाधुसेव्यत्वमस्योचितमिति सूचयति। सरघा = मधुमक्षिका। सर्वस्वं = मध्विति यावत्॥ १२८॥

**सदा साधुजनाम्भोधिसुधाबिम्बाय विष्णवे।**
**श्रीमध्वमुनिहृद्व्योमधाम्ने भूम्ने नमोनमः॥ १२९॥**

एवं समापितप्रकरणो भगवान् वादिराजमुनिरन्तेऽपि चन्द्रश्लेषया भगवन्तं वर्णयन् श्रीमदाचार्यानपि स्मरन् महाविष्णुं प्रणमति- **सदेति**॥ सुधाबिम्बोऽमृतमयमण्डलश्चन्द्र इति यावत्। चन्द्रोपि व्योमधामा भवति। अयमपि श्रीमदाचार्यहृदयाम्बरनिलय इति भावः। भूमा पूर्णः॥

**॥ इति श्रीमद्वादिराजपूज्यचरणविरचितं पाषण्डखण्डनम्॥**

**॥ श्रीकृष्णार्पणमस्तु॥**

सुरोत्तमयतिः श्रीमद्वादिराजसहोदरः।
पाषण्डखण्डनव्याख्यामकरोद्धरितुष्टये॥

॥ इति पाषण्डखण्डनव्यख्या सुरोत्तमयतिकृता समाप्ता॥

॥ श्रीकृष्णार्पणमस्तु॥[1]

[1] पूर्वं मुद्रितग्रन्थे शोधकानां प्रकाशकानां च नाम लिखितम्- "कौजलगीकरोपाह्वरामाचार्येण शोधितम्। आबाजीरामचन्द्रैश्च सावन्तोपाभिधैरिदम्॥ बेळगावाख्यनगरे स्वकीये यन्त्रणालये। मुद्रयित्वा रामतत्वप्रकाशे प्रकटीकृतम्॥ (शके १८३३ सन्न १९११ इसवी)" इति।

संश्रित्य विष्णोः पदमत्र साधु सस्यानि विज्ञानजलेन हर्षम्।
नयन्तमुच्चैः प्रवचोनिनादं सुरोत्तमार्याम्बुधरं नतोऽस्मि॥

सुरोत्तमार्यस्तस्यासीत् सोदर्यो विद्वदग्रणीः।
यतीन्द्रो विष्णुतीर्थार्यो यथा मध्वस्य वै पुरा॥

